भा० यादिभावो दुर्निष्प्रपततरस्तस्मादपि दुर्निष्प्रपतराद्रेतःसिग्देहसम्बन्धो दुर्निष्प्रपततर इत्यर्थः। यस्मादूर्द्ध्वरेतोभिर्बालैः पुंस्त्वरहितैः स्थविरैर्वा भक्षिता अन्तराले शीर्यन्ते। अनेकत्वादन्नादानां। कदाचित्काकतालीयन्यायेन रेतःसिग्भिर्भक्ष्यन्ते यदा तदा रेतःसिग्भावं गतानां कर्मिणां वृत्तिलाभः। कथं यो यो ह्यन्नमत्ति अनुशयिभिः संश्लिष्टं रेतःसिक् यश्च रेतः सिञ्चत्यृतुकाले योषिति तद्भूय एव तदाकृतिरेव भवति। रेतोरूपेण तदवयव आकृतिभूयस्त्वं भूय इत्युच्यते रेतोरूपेण योषिति॥

रेतसो रेतःसिगाकृतिभावितत्वात्। सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमिति हि श्रुत्यन्तरात्। अतो रेतःसिगाकृतिरेव भवतीत्यर्थः। तथा हि पुरुषात्पुरुषो जायते

---

आ० त्याह। कदाचिदिति। तथापि भक्षेषु जातानां रेतःसिग्योगः सुलभः स्यादिति नेत्याह। भक्षेष्वपीति। इतिशब्दो यच्छब्देन पूर्वेण सम्बध्यते। सर्वमतः शब्दो हेतुपरतया व्याख्यातः। सम्प्रति व्रीह्यादिवद्धिवा पाठेन तं व्याचष्टे। अथवेति। दुर्निष्प्रपततरमिति तकारद्वयसहिते पाठे सति विवक्षितमर्थमाह। व्रीह्यादीति। तत्र हेतुमाह। यस्मादिति। तर्हि तेषामन्नादानां विशीर्णानां देहभाक्त्वाभावादनुशयिनामैश्वर्यमित्याशङ्क्याह। कदाचिदिति। काकतालीयया वृत्त्या यादृच्छिकन्यायेनेति यावत्। अनुशयिनस्तस्य कर्मणो भाविदेहारम्भार्थं मुख्यं प्रश्नपूर्वकं विवृणोति। कथमित्यादिना।

अनुशयिनो रेतःसिगाकारभाक्त्वे हेतुमाह। रेतस इति। तस्य रेतःसिगाकृत्या तदङ्गेन भावितत्वात्सर्वाङ्गत्वात्तदङ्गसम्भूतत्वात्तद्रूपेण गर्भाशयमनुप्रविष्टोऽनुशयी रेतःसिगाकृतिर्भवतीत्यर्थः। रेतसो रेतःसिगङ्गसमुत्थत्वे प्रमाणमैतरेयकश्रुतिरित्याह। सर्वेभ्य इति। रेतोरूपेण गर्भाशयं प्रविष्टस्य रेतःसिगाकार-

भा॰ गोगर्दभाकृतिरेव न जात्यन्तराकृतिस्तस्मादुक्तं तद्रूप एव भवतीति। ये त्वन्येऽनुशयिभ्यश्चन्द्रमण्डलमनारुह्यैव पापकर्मभिर्घोरैर्व्रीहियवादिभावं प्रतिपद्यन्ते पुनर्मनुष्यादिभावं गतास्तेषां नानुशयिनामिव दुर्निष्प्रपततरं। कस्मात् कर्मणा हि तैर्व्रीहियवादिदेह उपात्त इति। तदुपभोगनिमित्तक्षये व्रीह्यादिस्तम्बदेहविनाशे यथा कर्मार्जितं देहान्तरं नवं नवं जलूकावत्संक्रमन्ते सविज्ञाना एव। सविज्ञानो भवति सविज्ञानमेवान्ववक्रामतीति श्रुत्यन्तरात्॥

यद्यप्युपसंहृतकरणाः सन्तो देहान्तरं गच्छन्ति तथापि स्वप्नवद्देहान्तरप्राप्तिनिमित्तकर्मोद्भावितवासना-

---

आ॰ त्वमुक्तं निगमयति। अत इति। अनुशयिनो देहसिताकारत्वे लौकिकानुभवमनुकूलयति। तथेति। चन्द्रमण्डलस्खलितानामवरोहतां व्रीह्यादिदेहसंश्लिष्टानां द्राघीयसा कालेन देहान्तरलाभश्चेत्तर्हि व्रीह्यादिदेहाभिमानिनामपि दुःखं निष्क्रमणं। व्रीह्यादिदेहसम्बन्धाविशेषादित्यत आह। ये त्विति। व्रीह्यादिदेहसम्बन्धाविशेषे कुतस्तद्देहभाजां ततो निःसरणमशक्यं न भवतीत्याशङ्क्य विशेषमाह। कस्मादित्यादिना। घोरैरिति कर्मदोषैर्यान्ति स्थावरतां नर इत्यादिश्रुतिस्मृत्योर्येषां कर्मनिमित्तं स्थावरं जन्म तेषां कर्मक्षय एवावधिः। अवरोहतां तु कर्मासङ्कीर्तनाद्वैषम्यमित्यर्थः। यथा जलूका तृणात्तृणान्तरं दीर्घभूता सङ्क्रमते न तथाऽनुशयिनो व्रीह्यादिदेहभाजोऽपि तद्योगेन देहान्तरं गच्छन्तस्तद्विषयविज्ञानवन्त एव गच्छन्तीत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति। सविज्ञान इति।

अथोपसंहृतकरणानां विज्ञाने कारणाभावात्कथं सविज्ञानत्वमत आह। यद्यपीति। दृष्टकारणाभावेऽप्यदृष्टमेवैषां वासनात्मकं ज्ञानोत्पत्तौ निमित्तमिति तेन सविज्ञाना एव गच्छन्ति देहान्तरमित्यत्र हेतुमाह। श्रुतिप्रामाण्यादिति। श्रुतिरत्र बृह-

भा॰ कानां कर्म्मणामनर्थानुबन्धित्वात्। न वृक्षारोहणपतनयत् विशेषसम्भवात्। देशाद्देशान्तरं प्रतिपित्सोः कर्म्मणा समभ्यवृत्तित्वात्। कर्म्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तं। वृक्षाग्रमारोहत इव फलं जिघृक्षोः। तथार्च्चिरादिना गच्छतां सविज्ञानत्वं भवेत्। धूमादिना च चन्द्रमण्डलमारुरुक्षतां न तथा चन्द्रमण्डलादवरुरुक्षतां वृक्षाग्रादिव पततां सचेतनत्वं। यथा च मुद्गराद्यभिहतानां तदभिघातवेदनानिमित्तसमूर्च्छितप्रतिबद्धकरणानां स्वदेहेनैव देशाद्देशान्तरं नीयमानानां विज्ञानशून्यता दृष्टा तथा चन्द्रमण्डलान्मानुषादिदेशान्तरं प्रत्यवरुरुक्षतां स्वर्गभोगनिमित्तकर्म्मक्षया-

---

व्या॰ र्थमाह। युक्तेति। यथा बुद्धिपूर्व्वं वृक्षमारोहतो सविज्ञानत्वेऽपि तस्मादबुद्धिपूर्व्वं पततो न सविज्ञानत्वं विधीयते। तथा चन्द्रमण्डलमारोहतां सविज्ञानत्वेऽपि ततोऽवरोहतां नैव तदस्ति। उद्भूतकर्म्माभावात्। इत्यारोहावरोहयोर्योगविशेषसम्भवान्नैवमिति परिहरति। न वृक्षेति। सङ्ग्रहवाक्यं विवृणोति। देशादित्यादिना। चकारात् गच्छतां सविज्ञानत्वं भवेदिति सम्बन्धः। अवरोहतां जीवानां सर्व्वथा विज्ञानशून्यत्वमयुक्तं तेषां चैतन्यस्वाभाव्यादुद्भूततामपि विज्ञानमात्रमस्त्येवेत्याशङ्क्योदाहरणान्तरमाह। यथा चेति। तेन मुद्गरादिना योऽभिघातस्तेन हेतुना यद्वेदनाख्यं निमित्तं तेन सम्मूर्च्छितानि प्रतिबद्धानि वा करणानि येषां तेषामिति यावत्। मर्द्दितोऽभिनष्टो देहोऽस्य स्थूलो देशो येषां तेषामन्तर एव प्रतिबद्धकरणानां युक्ता विज्ञानशून्यतेति सम्बन्धः। यथोक्तदृष्टान्तवशाच्चन्द्रमण्डलादवरोहन्तो विज्ञानशून्याः सिद्ध्यन्तीति निगमयति। अत इति। तथापि मूर्च्छितानां

भा० न्मृदिताद्देहानां प्रतिबद्धकरणानां। अतस्तेऽपरित्यक्तदेह-बीजभूताभिरद्भिर्मूर्च्छिता इवाकाशादिक्रमेणेमामवरुह्य कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते। प्रतिबद्धकरणतयाऽनुद्भूतविज्ञाना एव॥

तथा लवनकण्डनपेषणसंस्कारभक्षणरसादिपरिणामरेतःसेककालेषु मूर्च्छितवदेव। देहान्तरारम्भकस्य

---

आ० स्थूलदेहसद्भावाद्देहान्तरगमनं न युक्तं। व्रीहित्वाप्तेस्तु तद-भावे कथं व्रीह्यादिभावः सम्भवतीत्यत आह। अपरित्यक्तेति। न परित्यक्तं देहभावस्य बीजं कर्मापूर्वं याभिरद्भिस्ताभिर-वहिता जीवा मूर्च्छितवद्विज्ञानशून्या गगनादिक्रमेण पृथिवीं प्राप्य कर्मफलभूतजातिस्थावरशरीरैः संश्लिष्यन्त इति सम्बन्धः। स्थावरदेहसम्बन्धित्वात्तद्गतजीववत्तदा सविज्ञानत्वं सम्भवती-त्याशङ्क्याह। प्रतिबद्धेति। व्रीह्यादिसंश्लेषावस्थायामनुशयिनां कर्मणोऽनुद्भूतवृत्तित्वात् करणानां च तत्र वृत्तिलाभाभावादनु-द्भूतविज्ञानत्वं युक्तमित्यर्थः।

न केवलं व्रीह्यादिसंश्लेषकालेऽनुद्भूतविज्ञानत्वं किन्तु व्रीह्या-देर्लवनादिकालेऽपीत्याह। तथेति। पाकसंस्कारो रसादीत्या-दिशब्देन शोणितमांसमेदोऽस्थिमज्जादेर्ग्रहणं। तस्मिन् काले मूर्च्छितवदनुद्भूतविज्ञानत्वे देहाद्विनिर्गतानां प्रागेवा-न्तरप्राप्तेस्तद्वदेवेति हेतुमाह। देहेति। अनन्तरत्वादिति छेदः कथं पुनरनुशयिनां विज्ञानशून्यत्वं। तथापि दृश्यन्ते-युक्ता दृष्टान्तं गत्वाऽन्यमार्गमनाकम्प्याऽज्ञानमुपसर्पतीत्यादौ सचेतना जलूका दृष्टान्तत्वेनोपादीयते तत्राह। देहबीजभू-तेति। सर्व्वास्ववस्थासु तासु व्रीह्यादिसंश्लेषलक्षणादिष्वादिति यावत्। न चेतनत्वात्र जलूकादृष्टान्तो विवक्षितं। किन्तु यावत्-मात्रमिति भावः। जलूकावत्त्वं जलूकासादृश्यमनुशयिनामि-त्यर्थः। आरोहतां सविज्ञानत्वमवरोहतां विज्ञानराहित्य-मित्युपपादारोहतामपि प्रावकाववात्प्रेभ्यः कर्मानुसारेण

भा॰ कर्मणोऽलब्धवृत्तित्वात्। देहबीजभूताभ्यामद्भ्यापरित्यागेनैव सर्वास्ववस्थासु वर्तन्त इति जलूकावच्चेतनावत्त्वं न विरुध्यते। अन्तराले त्वविज्ञानं मूर्च्छितवदित्यदोषः। न च वैदिकानां कर्मणां हिंसायुक्तत्वेनोभयहेतुत्वं शक्यमनुमातुं। हिंसायाः शास्त्रचोदितत्वात्। अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य इति श्रुतेः। शास्त्रचोदितायां हिंसायां नाधर्महेतुत्वमभ्युपगम्यते। अभ्युपगतेऽप्यधर्महेतुत्वे मन्त्रैर्विषादिवत्तदपनयोपपत्तेर्न दुःखकार्यारम्भकत्वोपपत्तिर्वैदिकानां कर्मणां मन्त्रेणेव विषभक्षणस्येति॥

---

टी॰ देहेऽवस्थानं तावदेव सविज्ञानत्वं। न देहाद्विनिर्गतानां प्राग्देहान्तरप्राप्तेः। तदस्त्वनुशयिनां तु चन्द्रमण्डलादवरोहतामपि न भाविदेहपर्य्यन्ता वासना दीर्घा भवति प्रमाणाभावादित्याह। अन्तराले त्विति॥ चन्द्रमण्डलादवरोहतां देहान्तरगमनस्य तुल्यत्वेऽपि विज्ञानशून्यत्वमदुष्टमित्युपसंहरति। इत्यदोष इति॥

यत्तु हिंसानुग्रहात्मकत्वाज्ज्योतिष्टोमादिकर्मणः स्थावरत्वमपि तत् पापमेव। तथाच वैदिकानां कर्मणामनर्थानुबन्धित्वादप्रामाण्यं श्रुतेरिति तत्राह। न चेति॥ उभयहेतुत्वमर्थानर्थहेतुत्वमिति यावत्। अहिंसन्नित्यादिश्रुतेः शास्त्रचोदितवैदिकेषु कर्मसु हिंसा नानर्थहेतुरित्याह। अभ्युपगतेऽपीति॥ यद्यपि स्वरूपेण हिंसानर्थहेतुरभ्युपगम्यते। तथापि तद्युक्तानां वैदिककर्मणां नानर्थारम्भकत्वं। यथा स्वरूपेण विषदध्यादेर्मरणज्वरादिहेतुत्वेऽपि मन्त्रशर्करादिभिः सहोपयुक्तस्य न तत्कार्यारम्भकत्वं। तथा हिंसायाः स्वतोऽधर्महेतुत्वेऽपि वैदिककर्मनिष्ठाया न तद्धेतुत्वं। वैदिकैरेव कर्मभिस्तत्कृतदोषापनयनसिद्धेरित्यर्थः। पूर्वोक्तमेव दृष्टान्तं स्पष्टयति। मन्त्रेणेति॥ तेन सहोपभुक्तस्य विषस्यानर्थाहेतुत्वेन पुष्टिहेतुत्ववद्वैदिककर्मानुप्रविष्टाया हिंसायाः पुरुषार्थमेव शुद्धमिति चेन्न शब्दादिति न्यायादित्यर्थः।

उ॰ तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्

---

भा॰ तत्र च तेष्वनुशयिनां य इह लोके रमणीयं शोभनं चरणं शीलं येषां ते रमणीयचरणा रमणीयचरणेनोपलक्षितः शोभनोऽनुशयः पुण्यं कर्म येषां ते रमणीयचरणा उच्यन्ते । क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः । तेनानुशयेन पुण्येन कर्मणा चन्द्रमण्डले भुक्तशेषेणाभ्याशो ह क्षिप्रमेव यदिति क्रियाविशेषणं । ते रमणीयां क्रौर्यादिवर्जितां योनिमापद्येरन् प्राप्नुयुः । ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वस्वकर्मानुरूपेण ॥

अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्मा-

---

आ॰ तद्रूप एव भवतीत्येतत्प्रसङ्गागतं परिसमाप्य प्रकृतं श्रुतिव्याख्यानमनुवर्तयति । तत्रेति । चन्द्राधिरूढे पूर्ववदभिलापादिति न्यायेन तेषु व्रीह्यादिषु संश्लिष्टा येऽनुशयिनस्तेषां मध्ये ये केचिदस्मिँल्लोके चन्द्रमण्डलप्राप्तेः प्रागवस्थायामनुष्ठिताशुभ्ररमणीयचरणास्ते रमणीयां योनिं प्रपद्येरन्निति सम्बन्धः । तमेव स्पष्टयति । शोभनमिति । कथं रमणीयचरणानुरोधेन शोभनोऽनुशयो लक्ष्यते तत्राह । क्रौर्येति । ते खल्वनुशयिनो देहवियोगानन्तरं तेन कर्मणा रमणीयां योनिमापद्येरन्निति यत्क्षिप्रमेवेति योजना । तत्रापि हेतुमाह । स्वकर्मेति । चरणेति प्रतीकं गृहीत्वा व्याचष्टे । पुनरिति । तद्विपरीता-

उ० श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ॥ ७ ॥ अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयꣳ स्थानं तेनासौ लोको न सम्पूर्यते

भा० पोऽशुभानुशया अभ्याशो ह यत्ते कपूयां यथा कर्मयोनिमापद्येरन् कपूयामेव। धर्मसम्बन्धवर्जितां जुगुप्सितां योनिमापद्येरन्। श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा स्वकर्मानुरूपेणैव। ये तु रमणीयचरणाद्द्विजातयस्ते स्वकर्मस्थाश्चेदिष्टापूर्तादिकारिणस्ते धूमादिना गच्छन्त्यागच्छन्ति। च पुनः पुनर्घटीयन्त्रवद्विद्यां चेत्प्राप्नुयुस्तदार्चिरादिना गच्छन्ति। यदा तु न विद्यासेविनो नापीष्टापूर्तादिकर्म सेवन्ते तदाऽथैतयोः पथोर्यथोक्तयोरर्चिर्धूमादिलक्षणयोर्न कतरेणान्यतरेण च नापि यन्ति। तानीमानि भूतानि

आ० लोकेभ्यो विलक्षणा इति यावत्। ते कपूयां योनिमशुभानुशयवशादेव स्थित्योगानन्तरमापद्येरन्निति यत्तदपि क्षिप्रमेवेति योजना। तत्रापि विकल्पे कारणमाह। स्वकर्मेति। योनिविकल्पे तृतीयं स्थानमवतारयितुं पूर्वोक्तौ पन्थानौ संक्षिप्यानुवदति। ये त्विति। शुभानुशयवशाद्ये केचिद्ब्राह्मणादियोनिमापन्नास्ते स्ववर्णाश्रमविहितकर्मनिष्ठाः सन्तो यदीष्टादिकर्म कृतवन्तस्तदा दक्षिणेन पथा चन्द्रं गच्छन्ति। तत्र च भोगाय ये कर्मणि भोगेन क्षीणे पुनरवशिष्टेन कर्मणा पृथिवीमागच्छन्ति। एवं घटीयन्त्रवत्पुनः पुनरारोहन्तोऽवरोहन्तश्च केवलकर्मिणो दृश्यन्ते। यदि चेद्द्विजातयः स्वकर्मस्थाः सन्तो ज्ञानं लभेरंस्तूत्तरेण

उ० तस्माज्जुगुप्सेत तदेष श्लोकः॥ ८॥ स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन् ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति॥ ९॥

---

भा० पितृलोकमिति व्याख्याता। पुनरावृत्तिरपि क्षीणानुशयानां चन्द्रमण्डलादाकाशादिक्रमेणोक्ता। अमुष्य लोकस्यापूरणं स्वशब्देनैवोक्तं। तेनासौ लोको न सम्पूर्यत इति॥ यस्मादेवं कष्टा संसारगतिस्तस्माज्जुगुप्सेत। यस्माच्च जन्ममरणजनितवेदनानुभवक्षणाः क्षुद्रजन्तवो ध्वान्ते घोरे दुस्तरे प्रवेशिताः सागर इवागाधे ऽप्लवे निराशाश्चोत्तरणं प्रति तस्माच्चैवंविधां संसारगतिं जुगुप्सेत बीभत्सेत घृणी भवेत्। मा भूदेवंविधे संसारे महोदधौ घोरे पात इति। तदेतस्मिन्नर्थे एष श्लोकः पञ्चाग्निविद्यास्तुतये॥ स्तेनो हिरण्यस्य ब्राह्मणसुवर्णस्य हर्ता। सुरां पिबन् ब्राह्मणः सन्। गुरोश्च तल्पं दारानावसन्। ब्रह्महा ब्राह्मणस्य हन्ता चेत्येते पतन्ति चत्वारः। पञ्चमश्च पतितैः सहाचरन्निति॥

---

आ० क्षीणानुशयानां चन्द्रलोके भोक्तव्यं कर्म भोगेन क्षपितवतामिति यावत्। स्वशब्देनैवानुवदति। तेनेति। विसर्पमेषां सञ्चारवती तीव्रा संसारगतिस्तस्या जुगुप्साभाव। यस्मादिति। कष्टोदयात्तस्य कष्टत्वं दर्शयति। यस्माच्चेति। जन्मादिना जनिता या वेदना तदनुभवे क्षत च्यवोऽवसरो मान्द्य येषां। तथाऽप्लव इति च्छेदः। प्लवोपायान्तर्हितश्चेदत्र ध्वस्तत्वात्स्वलेत्यभिप्रेत्याह। तस्माच्चेति। संसारस्य पञ्चसंख्या तात्पर्यमुक्त्वा पञ्चाग्निविद्यायामनुष्ठाननिषेधार्थं तस्य ज्ञापकं श्लोकमुदाहृत्य व्याचष्टे। तदेतस्मिन्नित्यादिना। पञ्चाग्निविद्यामाहात्म्यं सम्पदं।

उ० अथ ह य एतानेवं पञ्चाग्नीन् वेद न सह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥१०॥१०॥

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरि-

---

भा० अथ ह पुनर्यो यथोक्तान् पञ्चाग्नीन् वेद स तैरप्याचरन्महापातकिभिः सह न पाप्मना लिप्यते शुद्ध एव । तेन पञ्चाग्निदर्शनेन पावितो यस्मात्पूतः पुण्यलोकः प्राजापत्यादिर्यस्य सोऽयं पुण्यलोको भवति य एवं वेद यथोक्तं समस्तं पञ्चभिः प्रश्नैः पृष्टमर्थजातं वेद । द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था ॥ १० ॥ दक्षिणेन पथा गच्छतामन्नभाव उक्तस्तद्देवानामन्नं तं देवा भक्षयन्तीति क्षुद्रजन्तुलक्षणा च कष्टा संसारगतिरुक्ता । तदुभयदोषपरिजिहीर्षया वैश्वानरात्मभावप्रतिपत्त्यर्थमुत्तरो ग्रन्थ आरभ्यते । अत्स्यन्नं पश्यसि प्रियमित्यादिलिङ्गादाख्यायिका सुखावबोधार्था विद्यासम्प्रदानन्यायप्रदर्शनार्था च ॥

प्राचीनशाल इति नामत उपमन्योरपत्यमौपमन्यवः ।

---

आ० पञ्चमहापातकिनः श्लोके निर्दिश्यन्ते न तु पञ्चाग्निविद्याकृतिरिह भातीत्याशङ्क्याह । अथेति । शुद्धत्वे हेतुमाह । तेनेति । कस्येदं फलमित्यपेक्षायां पूर्वोक्तविद्यावन्तमनुवदति । य एवमिति ॥ १० ॥ पूर्वोत्तरयोः सन्दर्भयोः सम्बन्धं दर्शयन्नुत्तरसन्दर्भमवतारयति । दक्षिणेनेत्यादिना । उत्तरग्रन्थस्य वैश्वानरात्मभावप्रतिपत्त्यर्थत्वे गमकमाह । अत्स्यन्नमिति ।

विद्यायाः सम्प्रदानं शिष्यस्तस्य न्यायो विनयादिसम्पत्तिस्त-

उ० न्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसाञ्चक्रुः को न आत्मा किं ब्रह्मेति ॥१॥

---

भा० सत्ययज्ञो नामतः पुलुषस्यापत्यं पौलुषिः । तथेन्द्रद्युम्नो नामतो भल्लवेरपत्यं भाल्लविस्तस्यापत्यं भाल्लवेयः । जन इति नामतः शर्कराक्षस्यापत्यं शार्कराक्ष्यः । बुडिलो नामतोऽश्वतराश्वस्यापत्यमाश्वतराश्विः । पञ्चापि ते हैते महाशाला महागृहस्था विस्तीर्णाभिः शालाभिर्युक्ताः सम्पन्नाः । महाश्रोत्रियाः श्रुताध्ययनवृत्तसम्पन्ना इत्यर्थः । ते एवम्भूताः सन्तः समेत्य सम्भूय क्वचिन्मीमांसां विचारणाञ्चक्रुः कृतवन्त इत्यर्थः । कथम् । को नोऽस्माकमात्मा किं ब्रह्मेत्यात्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वं ब्रह्मेत्यध्यात्मपरिच्छिन्नमात्मानं निवर्त्तयत्यात्मेति च आत्मव्यतिरिक्तस्यादित्यादिब्रह्मण उपास्यत्वं निवर्त्तयति । अभेदेनात्मैव ब्रह्म ब्रह्मैवात्मेत्येवं सर्वात्मा वैश्वानरो ब्रह्म स आत्मेत्येतत्सिद्धं भवति ॥

---

व्या० तदर्थं नार्थ आख्यायिका । इष्यते चात्र प्राचीनशालप्रभृतीनां तत्सम्पत्तिरित्याह । विशेषेति० । आत्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वं व्यावर्त्याभावादित्याशङ्क्याह । ब्रह्मेति । उक्तरीत्या मिथो विशेषणविशेष्यत्वे फलितमाह । अभेदेति ।

उ० ते ह सम्पादयाञ्चक्रुरुद्दालको वै भगवन्तोऽय-
मारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तᳪ
हन्ताभ्यागच्छामेति तᳪ हाभ्याजग्मुः ॥ २ ॥ स
ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला
महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये
हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥ तान् होवा-
चाश्वपतिर्वै भगवन्तो ऽयं कैकेयः सम्प्रतीममा-

---

भा० मूर्द्धा ते व्यपतिष्यदन्धोऽभविष्यदित्यादिलिङ्गात् । ते ह मीमांसन्तोऽपि निश्चयमलभमानाः सम्पादयाञ्चक्रुः सम्पादितवन्त आत्मन उपदेष्टारं। उद्दालको वै प्रसिद्धो नामतः । हे भगवन्तः पूजावन्तो ऽयमारुणिः अरुणस्यापत्यं सम्प्रति सम्यगिममात्मानं वैश्वानरमस्मदभिप्रेतमध्येति स्मरति । तं हन्तेदानीमभ्यागच्छामेत्येवं निश्चित्य ॥ हाभ्याजग्मुस्तं गतवन्तः। आरुणिः स ह तान् दृष्ट्वैव तेषामागमनप्रयोजनं बुध्वा सम्पादयाञ्चकार । कथं । प्रक्ष्यन्ति मां वैश्वानरं इमे महाशाला महाश्रोत्रियास्तेभ्योऽहं न सर्व्वमिव पृष्टं प्रतिपत्स्ये वक्तुं नोत्सहे । अतो हन्ताहमिदानीमन्यमेषामभ्यनुशासानि वक्ष्याम्युपदेष्टारमित्येवं सम्पाद्य तान् होवाच । अश्वपतिर्वै नामतो भगवन्तोऽयं केकय-

---

था० इतरथोपास्यस्य सर्वात्मत्वं उच्यते। परिच्छिन्नोपासनमत्र निन्दितत्वाद्भूय एतुबन्धायाप्यलमिति न्यायादित्याह। मूर्द्धेति। भग-

उ॰ स्मान वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मु ॥ ४ ॥ तेभ्यो ह प्राप्तेभ्य पृथगर्हाणि कारयाञ्चकार स ह प्रात संजिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान् स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धन दास्यामि तावद्भगवद्भ्यो दास्यामि

---

भा॰ अश्वपते कैकेय सम्यगिममात्मान वैश्वानरमध्येतीत्यादि समान । तेभ्यो ह राजा प्राप्तेभ्य पृथक् पृथगर्हाण्य र्हणानि पुरोहितैर्भृत्यैश्च कारयाञ्चकार कारितवान् ॥ स हान्येद्युराजा प्रात संजिहान उवाच विनयेनोपगम्यैतद्धन मत्त उपादध्वमिति । तै प्रत्याख्यातो मयि दोष पश्यन्ति नून यतो न प्रतिगृह्णन्ति मत्तो धनमिति मन्वान आत्मन सद्वृत्ततां प्रतिपिपादयिषन्नाह । न मे मम जनपदे स्तेन परस्वहर्ता विद्यते । न कदर्योऽदाता सति विभवे । न मद्यपो द्विजोत्तम सन् । नानाहिताग्नि शतगु । नाविद्वानधिकारानुरूप । न स्वैरी परदारेषु गन्ता । अत एव स्वैरिणी कुतो दुष्टचारिणी न सम्भवतीत्यर्थ । तैश्च न वय धनार्थिन इत्युक्त आह अल्प मत्वैते धन न गृह्णन्तीति ।

---

आ॰ वयं नाम सम्यागतासकृदिति पूर्वेण सम्बन्ध । जनपदेत्यादौ भगवन्त इति प्राचीनशालादयस्तद सम्बोध्यन्ते । तदेवमादि [illegible] आचष्टे । न [illegible] ।

उ० वसन्तु भगवन्त इति ॥ ५ ॥ ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेदात्मानमेवेमं वैश्वानरꣳ सम्प्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥ तान् होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह

---

भा० यक्ष्यमाणो वै कतिभिरहोभिरहं हे भगवन्तोऽस्मि । तदर्थं क्लृप्तं धनं मया यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावत्प्रत्येकं भगवद्भ्योऽपि दास्यामि । वसन्तु भगवन्तः पश्यन्तु च मम यागमित्युक्तास्ते होचुः । येन हैवार्थेन प्रयोजनेन यं प्रति चरेद्गच्छेत्पुरुषस्तं हैवार्थं वदेत् । इदमेव प्रयोजनमागमनस्येत्ययं न्यायः सतां । वयञ्च वैश्वानरज्ञानार्थिनः । आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि सम्यग्जानासि अतस्तमेव नोऽस्मभ्यं ब्रूहीत्युक्तस्तान् होवाच । प्रातर्वो युष्मभ्यं प्रतिवक्तास्मि ,प्रतिवाक्यं दातास्मीत्युक्तास्ते च राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ता अपरेद्युः पूर्वाह्णे राजानं प्रतिचक्रमिरे गतवन्तः । यत एवं महाशाला महाश्रोत्रिया ब्राह्मणाः सन्तो महाकुलीनत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थिनो विनयेनोपजग्मुः । तथाऽन्यैर्विद्योपादित्सुभिर्भवितव्यं ।

---

आ० यथोक्तं ख्यातप्रसिद्धमिति यावत् । किमर्थं भगवदागमनप्रयोजनं तदाह । वयञ्चेति ।

तत्समापि प्राप्नोति श्रुतिं निरस्यति । आत्मानमिति । शिष्यभावेनोपसन्नेभ्यो विद्या दातव्या न यथा कथंचिदिति राज्ञोऽभि-

उ० समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुप-
नीयैवैतदुवाच ॥ ७ ॥ ११ ॥

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥ अत्स्यन्नं पश्यसि

---

भा० तेभ्यश्चाददाद्विद्यां विवधुरनुपनीयैवोपनयनमकृत्वैव तान् यथायोग्येभ्यो विद्यामदात् तथाऽन्येनापि विद्या दातव्येत्याख्यायिकार्थः । एतद्वैश्वानरविज्ञानमुवाचेति वक्ष्यमाणेन सम्बन्धः ॥ ११ ॥

स कथमुवाचेत्याह । औपमन्यव हे कमात्मानं वैश्वानरं त्वमुपास्स इति पप्रच्छ । नन्वयमन्याय आचार्यः सन् शिष्यं पृच्छतीति । नैष दोषः । यद्वेत्थ तेन मोपसीद ततस्त ऊर्द्ध्वं वक्ष्यामीति न्यायदर्शनात् । अन्यथाप्यप्रतिभानवति शिष्ये प्रतिभोत्पादनार्थः प्रश्नो दृष्टोऽजातशत्रोः । क्वैष तदाऽभूत् कुत एतदागादिति । दिवमेव द्युलोकमेव वैश्वा-

---

आ० प्रायः । ते हेत्यादिवाक्यस्य तात्पर्यं दर्शयति । यत इति । योगक्षेमार्थं राजानं प्रत्युपगमनमिष्टमेवेति मन्वानो विशिनष्टि । विद्यार्थिन इति । तथेत्यचातःशब्दो द्रष्टव्यः । उपनयनं पादयोर्निपतनं वक्ष्यमाणवैश्वानरविद्यां । तेनैतदित्यस्य सम्बन्ध इति यावत् । आख्यायिकातात्पर्यमुपसंहरति । यथेति ॥ ११ ॥

शिष्यो हि प्रष्टा । आचार्यस्तु प्रतिवक्तेति न्यायेन प्रश्ने । नन्विति । वाक्यशेषावष्टम्भेन दूषयति । नैष दोष इति ।

उ॰ प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥ २ ॥ १२॥ अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमु-

---

भा॰ नरमुपास्से भगवो राजन्निति होवाच । एष वै सुतेजाः शोभनं तेजो यस्य सोऽयं सुतेजा इति प्रसिद्धो वैश्वानर आत्मा। अस्यात्मनोऽवयवभूतत्वाद्यं त्वमात्मानमात्मैकदेशमुपास्से तस्मात्सुतेजसो वैश्वानरस्योपासनात्तव सुतमभिषुतं सोमरूपं कर्माणि प्रसुतं प्रकर्षेण च सुतमासुतमाहर्गणादिषु तव कुले दृश्यते अतीव कर्मिणस्त्वत्कुलीना इत्यर्थः । अत्स्यन्नं दीप्ताग्निः सन् पश्यसि च पुत्रपौत्रादिप्रियमिष्टं ॥

अन्योऽप्यन्नमत्ति पश्यति च प्रियं भवत्यस्य सुतं प्रसुतमासुतमित्यादिकर्मित्वं ब्रह्मवर्चसं कुले यः कश्चिदेतं यथोक्तमेवं वैश्वानरमुपास्ते मूर्द्धा तु वैश्वानरस्यैष न समस्तो वैश्वानरः । अतः समस्तबुद्ध्या वैश्वानरस्योपासनाच्छिरो मूर्द्धा ते

---

आ॰ बृहदारण्यकश्रुत्यालोचनायामपि नैतदन्याय्यमित्याह । अन्यत्रापीति । आचार्यस्याजातशत्रोरिति सम्बन्धः । तस्यात्मत्वे हेतुमाह । आत्मन इति । एकाहादिरूपो ज्योतिष्टोमादिरहर्गणश्च तत्र सोमरूपं सुतादरूपं अहीने प्रसुतं सत्रे त्वासुतमिति भेदः । तर्हीति पुनर्वचनमन्वयदर्शनार्थं ।

न केवलं प्राचीनशालस्यैवेदं फलं किन्त्वन्यस्यापि भवतीत्याह । अन्योऽपीति । तर्हि यथोक्तवैश्वानरध्यानादेव तत्तत्-

उ॰ पास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरोऽयं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥ प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुर्ह्येतदात्मन इति होवाचान्धोऽभविष्यद्यन्मां

भा॰ विपरीतग्राहिणं व्यपतिष्यद्विपतितमभविष्यत् । यद्यदि मां नागतोऽभविष्यत् साध्वकार्षीर्यन्मामागतोऽसीत्यभिप्रायः ॥ १२ ॥ अथ होवाच सत्ययज्ञं पौलुषिं हे प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच । शुक्लनीलादिरूपत्वाद्विश्वरूपत्वमादित्यस्य सर्वरूपत्वाद्वा ॥ सर्वाणि रूपाणि हि त्वाष्ट्राणि यतोऽतो वा विश्वरूप आदित्यस्तदुपासनात्तव बहु विश्वरूपमिहामुत्रार्थमुपकरणं दृश्यते कुले । किञ्च त्वामनुप्रवृत्तोऽश्वतरीभ्यां युक्तो रथोऽश्वतरीरथो दासीनिष्को दासीभिर्युक्तो निष्को हारो दासीनिष्कोऽत्स्यन्नमित्यादि समानं । चक्षुर्वैश्वानरस्य

आ॰ मेत्याह स्पष्टम् ।मूर्द्धा त्विति । अक्षरार्थमुक्त्वा विवक्षितार्थमाह । साध्विति ॥ १२ ॥ अथ प्राचीनशाले तूष्णीम्भूते जिज्ञासमाने सत्ययज्ञमित्यर्थः । आदित्यस्य शुक्लादिरूपवत्त्वं स्पष्टी भविष्यति । तस्य सर्वरूपत्वेन विश्वरूपत्वमुपपादयति । त्वा- ष्ट्रीति । अत्स्यन्नमित्यादि । चक्षुर्ह्येतदित्यत्र प्राणत्वमिति शेषः । चक्षुर्ह्येतदित्यादिवाक्यं व्याचष्टे । चक्षुरित्यादिना । तथापि तात्पर्यं

उ० नागमिष्य इति ॥ २ ॥ १३ ॥ अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आययन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त

---

भा० तु सविता । तस्य समस्तबुद्ध्योपासनादन्धो भविष्यच्चक्षुर्हीनो भविष्यो यन्मां नागमिष्य इति पूर्ववत् ॥ १२ ॥ अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यादि समानं । पृथग्वर्त्माऽऽत्मा नाना वर्त्मानि यस्य वायोरावहोद्वहादिभिर्भेदैर्वर्त्तमानस्य सोऽयं पृथग्वर्त्मात्मा वायुः । तस्मात्पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात् पृथङ्नानादिक्कास्त्वां प्रति बलयो वस्त्रान्नादिलक्षणा बलय आयन्ति आगच्छन्ति । पृथग्रथश्रेणयो रथपङ्क्तयोऽपि त्वामनुयन्ति । अत्स्यन्नमित्यादि समानं । प्राणस्त्वेष आत्मन इति

---

आ० यथा पूर्वं तथाऽयमित्याह । पूर्ववदिति ॥ १२ ॥ वायुरेवापरमात्मत्वमित्यपशब्दार्थः । एवमित्यतः प्रागुक्तमादिपदेन गृहीतं । पृथग्वर्त्मेति प्रतीकमादाय व्याचष्टे । नानेति । आभिमुख्येनाग-च्छन्तीत्याह । ऊर्ध्वेन गच्छतीत्युद्वहः । तस्मात्त्वामित्यादि व्याचष्टे । तस्मादिति । नानादिक्काः नानाविधास्तद्दिगुद्भवा इत्यर्थः । अत्स्यन्नमित्यादि समानमित्यत्रादिपदमुपात्तं ब्रह्मवर्चस-

उ० उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ २ ॥ १४ ॥
अथ होवाच जनꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥
अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्दे-

---

भा० होवाच प्राणस्ते तव उदक्रमिष्यदुत्क्रान्तोऽभविष्यद्यन्मां नागमिष्य इति ॥१४॥ अथ होवाच जनमित्यादि समानं। एष वै बहुल आत्मा वैश्वानरः। बहुलत्वमाकाशस्य सर्वगतत्वाद्बहुलगुणोपासनाच्च। त्वं बहुलोऽसि प्रजया पुत्रपौत्रादिलक्षणया धनेन च हिरण्यादिना। सन्देहस्त्वेष, सन्देहो मध्यमशरीरं वैश्वानरस्य। दिहतेर्धातोरुपचयार्थत्वान्मांसरुधिरास्थ्यादिभिश्च बहुलं शरीरं। तत्सन्देहस्ते तव शरीरं व्यशीर्य्यत शीर्णमभविष्यद्यन्मां नागमिष्य इति॥१५॥

---

आ० हार्थमुत्तरवाक्येऽप्यभिप्रायसाम्यं मत्वाह। प्राणस्त्विति। १४। इन्द्रद्युम्नोपरमानन्तर्यमथशब्दार्थः। जनादिपदमेव इत्याम्नातान्तवाक्यसंग्रहार्थं। कथमाकाशस्य बहुलत्वमत आह। बहुलत्वमिति। कथं शरीरस्य मध्यमे भागे [illegible] सन्देहशब्दो वर्त्तते तत्राह। दिहतेरिति। आकाशस्य सर्वगतत्वेन बहुलत्वादेहस्य च परिच्छिन्नत्वेन तदभावात्। कथमाकाशं वैश्वानरस्य शरीरं स्यादित्याशङ्क्याह। मांसेति। तच्छरीरमिति सम्बन्धः।१५।

उ० हस्ते व्यशीर्यद्यन्मां नागमिष्य इति॥२॥१५॥अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान् पुष्टिमानसि॥ १॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति॥२॥१६॥

---

भा० अथ होवाच बुडिलं आश्वतराश्विमित्यादि समानं । एष वै रयिरात्मा वैश्वानरो धनरूपः । अद्भ्योऽन्नं ततो धनमिति । तस्माद्रयिमान् धनवांस्त्वं पुष्टिमांश्च शरीरेण पुष्टेरन्ननिमित्तत्वात् । बस्तिस्त्वेष आत्मनो वैश्वानरस्य बस्तिर्मूत्रसङ्ग्रहस्थानं बस्तिस्ते व्यभेत्स्यद्भिन्नोऽभविष्यद्यन्मां नागमिष्य इति ॥ १६ ॥

---

आ० [illegible] । कथमबात्मको वैश्वानरो रयिरिति धनेन निर्दिश्यते तत्राह । अद्भ्य इति । [illegible] [illegible] [illegible] इत्यर्थः । [illegible] [illegible] [illegible] कथं पुष्टिमानित्यधिका [illegible] । पुष्टिश्चेति । [illegible] [illegible] [illegible] । बस्तिरिति ॥ १६ ॥

उ० अथ होवाचोद्दालकमारुणिं गौतम कं त्वमा-
त्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति
होवाचैष वै प्रतिष्ठात्मा वैश्वानरोऽयं त्वमात्मान-
मुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशु-
भिश्च ॥ १ ॥ अत्त्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति
प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं
वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच
पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ २ ॥
१७ ॥ तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं

---

भा० अथ होवाचोद्दालकमित्यादि समानं । पृथिवीमेव भगवो राजन्निति होवाच । एष वै प्रतिष्ठा पादौ वैश्वानरस्य । पादौ ते व्यम्लास्येतां विम्लानावभविष्येतां शिथिलीभूतौ यन्मां नागमिष्य इति ॥ १७ ॥ तान् यथोक्तवैश्वानरदर्शनवतो ह उवाच । एते यूयं वै खल्वित्यनर्थकौ यूयं

---

आ० प्राचीनशालप्रभृतिषु पञ्चसु गौतममातिष्ठमानेष्वनन्तरमित्यथशब्दार्थः । उद्दालकान्तेषूपासकेषु साकल्येन वैश्वानरविद्यां वक्तुकामस्तेषां मिथ्याज्ञानमनुवदति । तानित्यादिना । खल्वर्थकाविवानर्थकौ निपातौ न त्वनर्थकावेव । तेषां मिथ्याज्ञानत्वसिद्धिकारकत्वात्पृथगित्यस्यार्थः । प्रागुक्तमपि पाठक्रमेण पुनरनूद्य पृथगिव विद्वांस इति सम्बन्धः । यथा जात्यन्धा हस्तिदर्शने भिन्नदृष्टयो भवन्ति तथा यूयं वैश्वानरमात्मानमेकमपि सर्वात्मकं सन्तं भिन्नमिव विद्वांसः परिच्छिन्नात्मरूपेणात्मानं बुद्धवन्तः । तथा च मिथ्यादर्शिनो यूयं प्रागेव प्रत्यवायाभ्यामागमवन्त साधु ज्ञातवन्त इत्यर्थः ॥ १७ ॥ प्रधानविद्यां वक्तुं पातनिका

उ० वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

---

भा० पृथगिवापृथक् सन्तमिममेकं वैश्वानरं विद्वाꣳसोऽन्नमत्थ परिच्छिन्नात्मबुद्ध्या एतद्धस्तिदर्शन इव जात्यन्धाः ॥ यस्त्वेतमेवं यथोक्तावयवैर्द्युमूर्द्धादिभिर्विशिष्टमेकं प्रादेशमात्रं प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रं । मुखादिषु वा करणेष्वकर्तृत्वेन मीयत इति प्रादेशमात्रः । द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः । प्रकर्षेण शास्त्रेणादिश्यन्त इति प्रादेशा द्युलोकादय एव तावत्परिमाणः प्रादेशमात्रः । शाखान्तरे तु मूर्द्धादिचिबुकप्रतिष्ठ इति प्रादेशमात्रं कल्पयन्ति । इह तु न तथाभिप्रेतः । तस्य ह वा एतस्यात्मन इत्याद्युपसंहारात् ॥ प्रत्यगात्मतया ऽभिविमीयतेऽह-

---

आ० कृत्वा तामिदानीमुपदिशति । यस्त्वित्यादिना । एतमेवम्भूतं यस्तूपास्ते स सर्वेष्वन्नमत्तीति सम्बन्धः । एवं शब्दार्थमाह । यथोक्तेति । एवं समस्तं त्रैलोक्यात्मकमिति यावत् । प्रादेशमात्रमित्येतद्विभजते । प्रादेशैरिति । यथोक्तैराधिदैविकावयवैरध्यात्मं प्रत्यगात्मत्वेनायं मीयत इति व्युत्पत्त्या प्रादेशमात्रत्वमिति यावत् । प्रकारान्तरेण व्याचष्टे । मुखादिष्विति । तेषु हि प्रदेशेष्वप्रम-कर्तृत्वेन साक्षितया मीयत इति व्युत्पत्त्या तथोच्यत इत्यर्थः । विधान्तरेण व्याचष्टे । द्युलोकादीति । अर्थान्तरमाह । प्रकर्षेणेति । व्याप्तमस्ति चैतन्यमिति न्यायेन पक्षान्तरमाह । शाखान्तरे त्विति । अस्तु तर्हि शाखान्तरप्रसिद्ध्यनुसारेण मूर्द्धानमारभ्याधरचिबुक-

उ॰ तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूप प्राण पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयि पृथिव्येव पादौ उर

भा॰ मिति ज्ञायत इत्यभिविमानस्तमेतमात्मानं वैश्वानरं विश्वान्नरान्नयति पुण्यपापानुरूपां गतिं। सर्वात्मैष ईश्वरो वैश्वानरो विश्वो नर एव वा सर्वात्मत्वात्। विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरः। तमेवमुपास्ते यः सोऽदन्नन्नादी सर्वेषु लोकेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु शरीरेन्द्रियमनो-बुद्धिषु तेषु ह्यात्मकल्पनाव्यपदेशः प्राणिनामन्नमत्ति। वैश्वानरवित्सर्वात्मा सन्नन्नमत्ति। न यथाऽज्ञः पिण्डमात्राभिमानः सन्नित्यर्थः। कस्मादेवं। यस्मात्तस्य ह वै प्रकृतस्यैवैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ

आ॰ सर्वस्मिं देहावयवे सम्पादितो वैश्वानरः प्रादेशमात्र इति नेत्याह। इह त्विति। सर्वात्मत्वेन वैश्वानरस्योपास्यत्वादप्रमाणमान अल्पश्रुतिरनर्थकेत्यर्थः। विशेषमाकार व्याचष्टे। प्रत्यगात्म तयेति। सर्वेश्वरत्व सर्वात्मत्व सर्वप्रत्यगात्मत्व वा विगृह्य वैश्वानरशब्दमनेकधा व्याकरोति। विश्वानित्यादिना। ईश्वरो वैश्वानर इत्यत्र वैश्वानरपदमध्ययन सम्बध्यते। स वैश्वानरविदन्नमदन् सर्वेषु लोकादिषु स्थितोऽन्नमत्तीति सम्बन्धः। कथमात्मशब्देन शरीरादयो गृह्यन्ते तत्राह। तेषु चेति। सर्वेषु लोकेष्वित्या दिवाक्यस्य तात्पर्यार्थं दर्शयति। वैश्वानरविदिति। वैश्वानरो पासकः सर्वात्मा सन्नन्नमत्तीत्येव तस्मादेतोर्निश्चितमित्याह

उ० एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनो ऽन्वाहार्य्यपचन आस्यमाहवनीयः ॥ १८ ॥ तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥ प्राणे तृप्यति चक्षुस्तृप्यति

---

भा० अथ वा विध्यर्थमेतद्वचनमेव उपास्य इति । अथेदानीं वैश्वानरविदो भोजनेऽग्निहोत्रं संपिपादयिषन्नाह एतस्य वैश्वानरस्य भोक्तुः उर एव वेदिराकारसामान्यात् । लोमानि बर्हिर्वेद्यामिवोरसि लोमान्यास्तीर्णानि दृश्यन्ते । हृदयं गार्हपत्यो हृदयाद्धि मनः प्रणीतमिवानन्तरीभवति । अतो ऽन्वाहार्य्यपचनोऽग्निर्मनः । आस्यं मुखमाहवनीयः । आहवनीय इव हूयतेऽस्मिन्नन्नमिति ॥ १८ ॥ तत्रैवं सति यद्भक्तं भोजनकाले आगच्छेद्भोजनार्थं तद्धोमार्थं तद्धोमीयं

---

आ० अनूद्य गुणोपदर्शनपक्षेणोत्तरं वाक्यमुपादत्ते । यस्मादित्यादिना । वैश्वानरस्य सर्व्वात्मत्वात्तदुपासकस्यापि तदात्मतया सर्व्वात्मत्वादसौ सर्व्वात्मभूतः सर्व्वमन्नमत्तीति युक्तमित्यर्थः । तस्येत्यादिवाक्यस्य तात्पर्य्यान्तरमाह । अथ वेति । प्रधानविद्याङ्गभूतमग्निहोत्रं दर्शयितुकामो भूमिकां करोति । अथेति । यस्मादित्युपक्रमादौ तदङ्गान्यवसितादित्यर्थः । वेदिरिति स्थण्डिलमात्रं गृह्यते । अग्निहोत्रे तावत्सामान्योपपत्त्यादिसहस्य दर्शपूर्णमासादौ यथा वेद्यास्तीर्य्यन्ते ते दर्भा बर्हिःशब्देनोच्यन्ते । हृदयस्य गार्हपत्यत्वं मन प्रणयनहेतुत्वात्प्रणीतत्वसामान्यमित्यर्थः । आहवनीयसादृश्यं च मुखस्य दर्शयति । आहवनीय इति ॥ १८ ॥ एवं सतीत्युक्तन्यायेनाग्निहोत्रे सम्पा-

उ० चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चा-दित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ १९ ॥ अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥ व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्र-मास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधि-तिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २० ॥ अथ यां तृतीयां जुहुयात्तां जुहुयादपा-नाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥ अपाने

---

भा० तद्धोमीयं अग्निहोत्रसम्पत्तिरस्य विवक्षितत्वादग्निहोत्राङ्गेति कर्त्तव्यताप्राप्तिः । इह तु भोक्ता यां प्रथमामाहुतिं जुहुयात्तां कथं जुहुयादित्याह । प्राणाय स्वाहेत्यनेन मन्त्रेणाहुतिशब्दादवदानप्रमाणमन्नं प्रक्षिपेदित्यर्थः । तेन

---

आ० दिति शेषोऽर्थः । तस्यादित्यग्निहोत्रस्य सामान्यादग्न्युद्धरणा-दीनि तद्वदत्रापि भवेयुरित्याशङ्क्य तद्विधानस्य विवक्षितत्वाभा-वमित्याह । अग्निहोत्रेति । इहेति वैश्वानरविदो भोजनमुच्यते । तत्र होमार्थमाद्यग्रासविभागमाह । स भोक्तेति । अवदानमिति मध्यमपरिमाणं वा पर्वं वा गृह्यते तत्र प्रथमं ग्रासम् ।

उ० तृप्यति वाक्तृप्यति वाचि तृप्यत्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यत्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २१ ॥ अथ यां चतुर्थीं जुहुयात्तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥ समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यत्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २२ ॥ अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥ उदाने तृप्यति वायुस्तृप्यति वायौ तृप्यत्याकाश-

---

भा० द्यौश्चेत्यादि तृप्यति प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यति चक्षुरादित्यो यथायथं द्यावादित्यश्च स्वामित्वेनाधितिष्ठतस्तच्च तृप्यति तस्य तृप्तिमनु स्वयं भुञ्जानस्तृप्यत्येवं प्रत्यक्षं । किञ्च प्रजादिभिश्च। तेजः शरीरस्था दीप्तिरुज्ज्वलत्वं प्रागल्भ्यं

---

आ० प्राणायेति । यदि द्वितीयमित्याह । व्याकरोतीति । अवदानस्य प्रमाणं परिमाणं कर्माङ्गं परिमाणं प्रसिद्धं तेन परिमितमिति यावत् । तृतीयमित्याह । तेनेति । भुञ्जानस्य तृप्तेः प्रत्यक्षं प्रमाणं प्राणादिषु तु शास्त्रमिति विभागमभिप्रेत्याह । प्रत्यक्ष

उ॰ स्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चा-
धितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया
पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति॥२॥२३॥
स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारा-
नपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात् ॥१॥ अथ

---

भा॰ वा ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः ॥ १९ ॥ अथ
यां द्वितीयां ॥ २० ॥ अथ यां तृतीयां ॥ २१ ॥ अथ यां
चतुर्थीं ॥ २२ ॥ अथ यां पञ्चमीमिति समानं ॥ २३ ॥
स यः कश्चिदिदं वैश्वानरदर्शनं यथोक्तमविद्वान्सन्नग्नि-
होत्रं प्रसिद्धं जुहोति यथाङ्गारानाहुतियोग्यानपोह्या-
नाहुतिस्थाने भस्मनि जुहुयात्तादृक् तत्तुल्यं तस्य
तदग्निहोत्रहवनं स्याद्वैश्वानरविदोऽग्निहोत्रमपेक्ष्येति
प्रसिद्धाग्निहोत्रनिन्दया वैश्वानरविदोऽग्निहोत्रं स्तूयते ।
अतश्चैतद्विशिष्टमग्निहोत्रं कथं अथ य एतदेवं विद्वान-

---

आ॰ मिति ॥ प्रजादिभिश्च भोक्ता तृप्यतीति सम्बन्धः ॥ १९ ॥ २० ॥
॥ २१ ॥ २२ ॥ २३ ॥

प्रसिद्धाग्निहोत्रनिन्दाद्वारेण वैश्वानरविदो यथोक्तमग्निहो-
त्रमवश्यकर्त्तव्यतायै स्तौति । स यः कश्चिदित्यादिना ॥ प्राग्या-
ग्निहोत्रस्य वैशिष्ट्यं होतव्यत्वमत शब्दोपात्तं प्रश्नपूर्व्वकं प्रकट-
यति । कथमित्यादिना ॥ नैयमिकाग्निहोत्रनिन्दाद्वारा प्राग्या-
ग्निहोत्रस्तुत्यन्तरं विधान्तरेण वस्तेन निरवद्यता कीर्त्यत इत्यथ-
शब्दार्थः । एतदिति वैश्वानरदर्शनमुक्तं । एवमिति ॥ वैश्वा-
नरस्योक्तसर्व्वात्मत्वादिप्रकारेणेत्यर्थः । अग्निहोत्रमिति साम्पा-
दिकमग्निहोत्रं गृह्यते । कथमिदमुक्तार्थं सर्व्वेषु लोकेष्वन्नमत्तीति

उ॰ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥२॥ तद्यथेषीका तूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्नि-

---

भा॰ ग्निहोत्रं जुहोति तस्य यथोक्तवैश्वानरविज्ञानवतः सर्व्वेषु लोकेष्वित्याद्युक्तार्थं । हुतमन्नमत्तीत्यनयोरेकार्थत्वात् ॥

किञ्च तद्यथा इषीकायास्तूलमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत प्रदह्येत क्षिप्रमेवं हास्य विदुषः सर्व्वात्मभूतस्य सर्व्वान्नानामत्तुः सर्व्वे निरवशिष्टाः पाप्मानो धर्म्माधर्म्माख्या अनेकजन्मसञ्चिता इह च प्राक् ज्ञानोत्पत्तेर्ज्ञानसहभाविनश्च प्रदूयन्ते प्रदह्येरन् । वर्त्तमानशरीरारम्भकपापवर्ज्जं लक्ष्यं प्रतिमुक्तेषुवत् प्रवृत्तफलत्वात्तस्य न दाहः ।

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति भुङ्क्ते । यद्यपि चण्डालायोच्छिष्टानर्हायोच्छिष्टं प्रयच्छेदुच्छिष्टं दद्यात् प्रतिषिद्धमुच्छिष्टदानं यद्यपि कुर्य्यादात्मनि हैवास्य चण्डा-

---

आ॰ वाक्यं व्याख्यातं । तस्य सर्व्वेषु लोकादिषु हुतं भवति इत्यन्यार्थमिदं वाक्यं तत्राह । हुतमिति ॥

इतश्च वैश्वानरविद्यावतोऽग्निहोत्रं विशिष्टमिति वक्तुं वैश्वानरविद्यां स्तौति । किञ्चेति ॥ तत्र वैश्वानरविद्यामाहात्म्ये दृष्टान्त इति यावत् । ईषिका मुञ्जामध्यवर्त्तिस्तम्बस्तैतत् ॥ सर्व्वमब्दारब्धकर्म्मणोऽपि दाहमाशङ्क्याह । वर्त्तमानेति ॥

वैश्वानरविद्याया महाफलत्वे सिद्धे तद्वतोऽग्निहोत्रं विशिष्टमिति तत्कर्त्तुः सर्व्वदोषास्पर्शित्वमित्याशयेनाह । य एतदिति ॥

उ॰ होत्रं जुहोति ॥ ३ ॥ तस्माद् हैवंविद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः ॥ ४ ॥ यथेह क्षुधिता बाला मातरं पर्य्युपासत एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५ ॥ २४ ॥ इति छान्दोग्योपनिषत्सु पञ्चमः प्रपाठकः ॥ ॐ तत्सत् ॥

---

भा॰ तदेतस्मिन् वैश्वानरे तद्धुतं स्यान्नाधर्मनिमित्तमिति विद्यामेव स्तौति । तदेतस्मिन्नर्थे श्लोको मन्त्रोऽप्येष भवति । यथेह लोके क्षुधिता बुभुक्षिता बाला मातरं पर्य्युपासते कदा नो मातान्नं प्रयच्छतीत्येवं सर्व्वाणि भूतान्यन्नादान्येवंविदोऽग्निहोत्रं भोजनमुपासते कदा त्वसौ भोक्ष्यत इति जगत्सर्व्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ २४ ॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ छान्दोग्योपनिषद्विवरणे पञ्चमः प्रपाठकः ॥ ५ ॥

---

आ॰ विद्यामेव विद्यास्तुतिद्वाराऽग्निहोत्रमिति यावत् स्तुत्यर्थेऽग्निहोत्रस्य स्तुतिरूपो योऽयंस्तस्मिन्निर्थेतन्मन्त्रस्य तात्पर्य्यार्थं दर्शयति । जगदिति । विदुषो वैश्वानरात्मन सर्व्वात्मतादित्यर्थः ॥ २४ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां पञ्चमः प्रपाठकः समाप्तः ॥ ५ ॥

ॐ तत्सत् ॥

उ॰ हरिः ॐ ॥ श्वेतकेतुर्हारुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्य्यं न वै सोम्या ऽस्मत्कुलीनो ऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥

---

भा॰ ॐ श्वेतकेतुर्हारुणेय आसेत्याद्यध्यायसम्बन्धः। सर्व्वं खल्विदं ब्रह्म तज्जलानित्युक्तं कथं तस्माज्जगदिदं जायते तस्मिन्नेव च लीयतेऽनिति च तेनैवेत्येतद्वक्तव्यं। अनन्तरञ्चैकस्मिन्भुक्ते विदुषि सर्व्वं जगत्तृप्तं भवतीत्युक्तं तदेकत्वे सदात्मनः सर्व्वभूतस्योपपद्यते नात्मभेदे कथञ्च तदेकत्वमिति तदर्थोऽयं षष्ठोऽध्याय आरभ्यते। पितापुत्राख्यायिका विद्यायाः सारिष्ठत्वप्रदर्शनार्था। श्वेतकेतुरिति नामतो ह इत्यैतिह्यार्थः। आरुणेयोऽस्य पौत्र आस बभूव। तं पुत्रं हारुणिः पिता योग्यं विद्याभाजनं मत्वा तस्योपनयनकालात्ययञ्च पश्यन्नुवाच हे श्वेतकेतोऽनुरूपं गुरुं कुलस्य नो गत्वा वस ब्रह्मचर्य्यं। न चैतद्युक्तं यदस्मत्कुलीनो

---

आ॰ ॐ वर्तिष्यमाणाध्यायस्यातीतेन सन्दर्भेण सम्बन्धं वक्तुं प्रतीकं गृहीत्वा तं प्रतिजानीते। श्वेतकेतुरिति॥ तमेव प्रकटयन्पूर्वं तृतीयेनाध्यायेनास्य सम्बन्धं कथयति। सर्व्वमिति॥ एतदर्थं तदर्थोऽयं षष्ठोऽध्याय आरभ्यत इति सम्बन्धः। व्यवहितसम्बन्धमुक्त्वाऽव्यवहितं समादर्शयति। अनन्तरञ्चेति॥ अध्यायतात्पर्य्यमुक्त्वाऽऽख्यायिकातात्पर्य्यमाह। पितेति॥ पिता प्रतिवक्ता पुत्रश्च प्रष्टेत्येवं विधेयमाख्यायिका। सा च विद्यायाः सारिष्ठत्वद्योतनार्था। पिता हि पुत्राय सारतममेवोपदिशतीत्यर्थः। कुलस्यानुरूपमित्यादिवचनात्कुलाधमस्य गुरुत्वमिति गम्यते ब्रह्मचर्य्यमध्ययनार्थमिति शेषः। गत्वेत्यादिवचनान्नाम्नायस्याधीनमध्ययनमिति

उ॰ स ह द्वादशवर्ष उपेत्य चतुर्विᳬशतिवर्षः सर्वान् वेदानधीत्य महामनाऽनूचानमानी स्तब्ध एयाय तᳬ ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामनाऽअनूचानमानी स्तब्धोऽस्युत तमादेशम-

भा॰ हे सोम्यानूचानधीत्य ब्रह्मबन्धुरिव भवतीति ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्त इति ॥

तस्यातः प्रवासोऽनुमीयते पितुः । येन स्वयं गुणवान् सन्पुत्रं नोपनेष्यति स पित्रोक्तः श्वेतकेतुर्द्वादशवर्षः सन्नुपेत्याचार्यं यावच्चतुर्विंशतिवर्षो बभूव तावत्सर्वान् वेदांश्चतुरोऽप्यधीत्य तदर्थं च बुद्ध्वा महामना महद्गम्भीरं मनो यस्य स ममात्मानमन्यैर्मन्यमानं मनो यस्य सोऽयं महामना अनूचानमान्यनूचानमात्मानं मन्यत इत्येवं शीलो यः सोऽनूचानमानी स्तब्धोऽप्रणतस्वभाव एयाय गृहम् । तमेवम्भूतं स्वात्मनोऽननुरूपं शीलं स्तब्धं मानिनं पुत्रं दृष्ट्वा पितोवाच सद्धर्मावतारचिकीर्षया श्वेतकेतो यन्न्विदं महामना अनूचानमानी स्तब्धश्चासि कस्तेऽतिशयः प्राप्त उपाध्यायादुतापि तमादेशमादिक्ष्यत इत्यादेशः । केवलशास्त्राचार्योपदेशगम्यमित्येतद्येन वा परं ब्रह्मादिश्यते स आदेशस्तमप्राक्ष्यः पृष्टवानस्याचार्यं तमादेशं विशिनष्टि येनादेशेन श्रुते-

आ॰ सूचितं । माभूदुपनयनमध्ययनं चेत्याशङ्क्याह । न चैतद्युक्तमिति । किमिति पिता स्वयमेवोपनीय पुत्रं नाध्यापयति तत्राह । तस्येति । अतः शब्दः स्पष्टविषयः । अनुमानं कथ्यते तत्र

उ॰ प्राक्ष्यो येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं

---

भा॰ नाश्रुतमप्यन्यच्छ्रुतं भवत्यमतं मतमतर्कितं तर्कितं भवत्यविज्ञातं विज्ञातमनिश्चितं निश्चितं भवतीति ॥ सर्वानपि वेदानधीत्य सर्वं चान्यद्वेद्यमधिगम्याप्यकृतार्थ एव भवति यावदात्मतत्त्वं न जानातीत्याख्यायिकातोऽवगम्यते । तदेतदद्भुतं श्रुत्वाह कथं त्वेतदप्रसिद्धमन्यविज्ञानेनान्यद्विज्ञातं भवतीत्येवं मन्वानः पृच्छति कथं नु केन प्रकारेण हे भगवः स आदेशो भवतीति । यथा स आदेशो भवति तच्छृणु हे सोम्य । यथा लोके एकेन मृत्पिण्डेन रुचककुम्भादिकारणभूतेन विज्ञातेन सर्वमन्यत्तद्विकारजातं मृण्मयं मृद्विकारजातं विज्ञातं स्यात् । कथं मृत्पिण्डे कारणे विज्ञाते कार्यमन्यद्विज्ञातं स्यात् । नैष दोषः । कारणेनानन्यत्वात् कार्यस्य

---

आ॰ कल्पकमाह । येनेति ॥ अनुमानोऽनुवचनसमर्थं । कर्मव्युत्पत्त्या करणव्युत्पत्त्या आदेशशब्दो व्याख्यातः ॥ किमित्यधीत्य सर्वं वेदमधिगततदर्थं च पुत्रमात्मविद्यामधिकृत्य पिता पृच्छति तस्य सर्ववेदाध्ययनादिनैव कृतार्थत्वादित्याशङ्क्याह । सर्वानपीति ॥ तदेतदद्भुतं श्रुत्वा हेत्युक्तं विवृणोति । कथं न्विति ॥ मृण्मयमित्यस्य व्याख्या मृद्विकारजातमिति । तद्यथा मृत्पिण्डेन विज्ञातेन विज्ञातं स्यात्तथाऽन्यदपि सर्वं कारणेन विज्ञातेन तद्विकारजातं विज्ञातं भवतीति योजना ॥ अन्यविज्ञानादन्यविज्ञानमदृष्टत्वादयुक्तमिति शङ्कते । कथमिति ॥ कार्य-

उ॰ स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं ॥ ४ ॥ यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यं ॥ ५ ॥ यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वा-

---

भा॰ यद्यन्यस्मिन् विज्ञातेऽन्यज्ज्ञायत इति। सत्यमेवं स्यात्। यद्यन्यत्कारणात्कार्यं स्यान्न त्वेवमन्यत्कारणात्कार्यं॥ कथं तर्हीदं लोके इदं कारणमयमस्य विकार इति। शृणु वाचारम्भणं वागारम्भणं वागालम्बनमित्येतत्। कोऽसौ। विकारो नामधेयं। नामैव नामधेयं स्वार्थे धेयट्प्रत्ययः। वागालम्बनमात्रं नामैव केवलं विकारो नामवस्त्वस्ति परमार्थतो मृत्तिकेत्येव मृत्तिकैव सत्यं वस्त्विति॥ यथा च सोम्यैकेन लोहमणिना सुवर्णपिण्डेन सर्वमन्यद्विकारजातं कटकमुकुटकेयूरादिविज्ञातं स्यात्। वाचारम्भणमित्यादि समानं। यथा सोम्यैकेन नखनिकृन्तनेनोपलक्षितेन कृष्णायसपिण्डेनेत्यर्थः। सर्वं कार्ष्णायसं कृष्णायसो विकारजातं विज्ञातं स्यात्। समानमन्यत्। अनेकदृष्टान्तोपादानं दार्ष्टा-

---

आ॰ कार्यकारणयोरन्यत्वासिद्धेर्नैवमिति परिहरति। नैष दोष इति। तदेव स्फुटयति। यद्यन्यस इत्यादिना। अन्यत्वाभावे लोकप्रसिद्धिविरोधं शङ्कते। कथं तर्हीति। वाचारम्भणमित्यत्र वाचेति तृतीया सप्तम्यर्थे द्रष्टव्या। नामधेयमित्यस्यार्थं कथयति। नामैवेति। विकारस्य मिथ्यात्वे किं परमार्थतोऽस्तीत्याशङ्क्याह।

उ॰ वारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यं एवꣳ सोम्य स आदेशो भवतीति ॥ ६ ॥ न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन्

---

भा॰ न्तिकानेकभेदानुगमार्थं दृष्टान्तत्रयोपादानम्। एवं सोम्य स आदेशो यो मयोक्तो भवतीत्युक्तवति पितर्याहेतरो न वै नूनं भगवन्तः पूजावन्तो गुरवो मम ये ते एतद्भगवदुक्तवस्तु नाऽवेदिषुर्न विज्ञातवन्तो नूनं ॥ यद्यदि ह्यवेदिष्यन् विदितवन्त एतद्वस्तु कथं मे गुणवते भक्तायानुगताय नावक्ष्यन्नोक्तवन्तस्तेनाहं मन्ये न विदितवन्त इति । अवाच्यमपि गुरोर्न्यग्भावमवादीत्पुनर्गुरुकुलं प्रति प्रेषणभयात् । अतो भगवांस्त्वेव मे मह्यं तद्वस्तु येन सर्व्वज्ञत्वं ज्ञातेन मे स्यात्तद्ब्रवीतु कथयत्वित्युक्तः पितोवाच तथास्तु सोम्येति ॥ ७ ॥ सदेव । सदित्यस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्व्वगतं । एकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते

---

आ॰ मृत्तिकेत्येवेति । एकेनैव दृष्टान्तेन विवक्षितार्थसिद्धौ किमनेकदृष्टान्तोपादानेनेत्याशङ्क्याह । अनेकेति । न वा इत्यादि प्रतीकमादाय व्याचष्टे । भगवन्त इति । तेषामज्ञाने हेतुमाह । यदीत्यादिना । ननु श्वेतकेतुर्गुरूणामज्ञानमाचक्षाणो गुरुद्रोही प्रत्यवायी स्यादित्याशङ्क्याह । अवाच्यमपीति । गुरूणामज्ञानमतःशब्दार्थः ॥ ७ ॥ यद्विज्ञानेन सर्व्वविज्ञानं लभ्यते तद्विज्ञानं प्रतिज्ञातं प्रकटीकर्त्तुं सर्व्वस्य सन्मात्रत्वं प्रतिजानीते । सदेवेति । सच्छब्दस्य सामान्यविषयत्वं व्युदस्यति । सदितीति । तस्य पृथिव्यादिभ्यो विशेषं दर्शयति । सूक्ष्ममिति । आकाशादिभ्यो विशेषमाह । निर्विशेषमिति । अन्यविशेषव्यावृत्त्यर्थं विशेष-

उ॰ कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेवमेतद्ब्रवी-
त्विति तथा सोम्येति होवाच ॥ ७ ॥ १ ॥ स देव
सोम्येदमग्र आसीदेकमेवाऽद्वितीयं ॥

---

भा॰ सर्ववेदान्तेभ्यः । एवशब्दोऽवधारणार्थः । किन्तदवधियत इत्याह । इदं जगन्नामरूपक्रियावद्विकृतमुपलभ्यते यत्तत्सदेवासीदित्यासीच्छब्देन सम्बध्यते । कदा सदेवेदमासीदित्युच्यते अग्रे जगतः प्रागुत्पत्तेः ॥

किं नेदानीमिदं सद्येनाग्रऽआसीदिति विशेष्यते न कथ तर्हि विशेषणं इदानीमपीदं सदेव किन्तु नामरूपविशेषणवदिदंशब्दबुद्धिविषयं चेतीदञ्च भवति । प्रागुत्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेद-

---

आ॰ माह । सर्वगतमिति ॥ तस्य तादृश्यं व्यावर्त्तयति । एकमिति ॥ प्रत्यगभिन्नस्य तस्य सतातिल वारयति । निरञ्जनमिति ॥ निष्क्रियत्वेन तत्कूटस्थत्वमाह । निरवयवमिति ॥ यथोक्ते वस्तुनि प्रमाणमाह । यदवगम्यत इति ॥

विशेषणानुसारेण शङ्कते । किं नेदानीमिति ॥ वर्त्तमानदशायामसत्त्वं जगतो नास्तीत्याह । नेति ॥ तदा सत्त्वाविशेषे विशेषणं न निर्वहतीति शङ्कते । कथमिति ॥ किं विशेषणसामर्थ्यादिदानीमसत्त्वं जगतश्चोद्यते किंवा विशेषणस्यार्थवत्त्वं पृच्छ्यते तत्राद्यं दूषयति । इदानीमपीति ॥ प्रत्यक्षविरोधान्न वर्त्तमानावस्थाया जगदसत्त्वसिद्धिरित्यर्थः ॥ द्वितीयं प्रत्याह । किन्त्विति ॥ यद्येदं वर्त्तमानं जगन्नामरूपविशेषणवदवस्थाप्यते तदिदंशब्दस्य तद्बुद्धेश्च विषयभावेन स्थितं भवतीति तस्येदमिदानीमित्यपि व्यवह्रियते तदेव त्वग्रे प्रागुत्पत्तेः सच्छब्दतद्बुद्धिमात्रगम्यमेव न त्विदंशब्दस्य तद्बुद्धेश्च विषयता भवतीत्यग्रे सदेवेदमग्र आसीदि-

उ॰ मुष्मामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥ तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः

भा॰ गच्छतीमञ्च सन्निहितममुञ्च विप्रकृष्टं दूरस्थमेव । यथा लोके दृष्टान्तो महापथ उभौ ग्रामौ प्रविष्टः । एवमेवैता आदित्या महापथा यथा गच्छन्ति तथोभयत्रादित्यस्य रश्मयः उभौ लोकावमुञ्चादित्यमण्डलमिमञ्च पुरुषं गच्छन्त्युभयत्र प्रविष्टाः । यथा महापथः । कथममुष्मादादित्यमण्डलात्प्रतायन्ते सन्तता भवन्ति । ता अध्यात्ममासु पिङ्गलादिवर्णासु यथोक्तासु नाडीषु सृप्ता गताः प्रविष्टा इत्यर्थः । आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः सन्तानभूताः सन्तस्तेऽमुष्मिन् रश्मीनामुभयलिङ्गत्वात्ते इत्युच्यन्ते । तत्तत्र एवंसति यत्र यस्मिन् काले एतत्स्वप्नमयो जीवः सुप्तो भवति

आ॰ मिति । नाभेरूर्ध्वं हृदयादधस्तादामाशयमाचक्षते । तद्गतं तेजः सौरं पित्तमित्युच्यते । तथाचरसस्य धातव्यारसहकारित्वादवर्णविशेषे कारणमाश्रयगतं पीतं रक्तञ्च रसरक्तमादित्यादिवर्णभादित्यर्थः । कथं तर्हि पिङ्गलस्येत्याद्या श्रुतिरित्याशङ्क्याह । श्रुतिस्त्विति । उक्तमर्थमाकाङ्क्षाद्वारा स्फोरयति । कथमित्यादिना । आदित्यस्य पैङ्गल्यादयो वर्णविशेषाः शास्त्रप्रामाण्यादेव प्रत्येतव्याः । आदित्यस्य तेजसो नाडीष्वनुगतस्य पैङ्गल्यादयो वर्णविशेषा भवन्तीत्युक्तं तदेव प्रश्नद्वारा दृष्टान्तावष्टम्भेन स्पष्टयति । तस्येत्यादिना । उभयत्रादित्यमण्डले पुरुषे चेत्यर्थः । तत्र पूर्वोक्तमेव दृष्टान्तमनुवदति । यथेति । उभौ ग्रामौ महापथो यथा गच्छति तथोभयत्रादित्यस्य रश्मयः प्रविष्टा

उ० स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तन्न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवति ॥३॥ अथ यत्रैतदबलिमानं नीतो

भा० स्वापस्य द्विप्रकारत्वाद्विशेषणं समस्त इति । उपसंहृतसर्वकरणवृत्तिरित्येतत् । अतो बाह्यविषयसम्पर्कजनितकालुष्याभावात्सम्यक्प्रसन्नः सम्प्रसन्नो भवति । अत एव स्वप्नविषयाकाराभासं मानसं स्वप्नप्रत्ययं न विजानाति नानुभवतीत्यर्थः । यदैवं सुप्तो भवति आसु सौरतेजःपूर्णासु यथोक्तासु नाडीषु तदा सृप्तः प्रविष्टो नाडीभिर्द्वारभूताभिर्हृदयाकाशं गतो भवतीत्यर्थः । न ह्यन्यत्र सत्सम्पत्तेः स्वप्नादर्शनमस्तीति सामर्थ्यान्नाडीष्विति सप्तमी तृतीयया परिणम्यते । तं तदा सम्पन्नं न कश्चन न कश्चिदपि धर्माधर्मरूपः पाप्मा स्पृशतीति स्वरू-

---

व्या० इत्यर्थः ॥ तमेव प्रवेशं प्रश्नद्वारा प्रकटयति । कथमित्यादिना ॥ कथं नाडीनां पिङ्गलादिवर्णत्वमित्याशङ्क्य सौरेण तेजसेत्यादिवाक्यं स्मारयति । यथोक्तास्विति ॥ अमुष्मिन्नादित्ये सृप्ता इति सम्बन्धः । कथं स्त्रीलिङ्गेन निर्दिष्टानां रश्मीनां पुंलिङ्गेन निर्देशस्तत्राह । रश्मीनामिति ॥ नाडीस्वरूपमुक्त्वा विज्ञानात्मनः सोपाधिकस्यालयत्वेन ता स्तोतुमादौ स्वापं प्रस्तौति । तत्रेति ॥ तमर्थमेव स्फुटयति । एवं सतीति ॥ नाडीस्वरूपे पूर्वोक्तरीत्या निरूपिते सतीत्यर्थः । एतत्स्वपनमिति क्रियाविशेषणम् । समस्तविशेषणस्यार्थवत्त्वमाह । स्वापस्येति ॥ दर्शनवृत्तिवददर्शनवृत्तिश्चेति द्विप्रकारं स्वापस्येष्टं । तत्र दर्शनवृत्तेः स्वापस्य व्यावर्त्यं समस्त इति विशेषणं । तस्य सम्पिण्डितमर्थमाह ।

उ॰ भवति तमभित आसीना आहुर्जानासि मा जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥४॥ अथ यत्रैतदस्माच्छ-

---

भा॰ पावस्थितत्वात्तदात्मनः । देहेन्द्रियविशिष्टं हि सुखदुःखकार्यप्रदानेन पाप्मा स्पृशतीति। न तु सत्सम्पन्नं स्वरूपावस्थं कश्चिदपि पाप्मा स्प्रष्टुमुत्सहते । अविषयत्वात् । अन्यो ह्यन्यस्य विषयो भवति न त्वनन्यत्वं केनचित्कुतश्चिदपि सत्सम्पन्नस्य । स्वरूपप्रच्यवनं त्वात्मनो जाग्रत्स्वप्नावस्था प्रति गमनं । बाह्यविषयप्रतिबोधोऽविद्याकामकर्मबीजस्य अब्रह्मविद्याकृतस्यादाहनिमित्तमित्यवोचाम यथ एव तद्विद्यापि प्रत्येतव्यं। यदैव सुप्तः सौरेण तेजसा हि नाड्यन्तर्गतेन सर्वतः सम्पन्नो व्याप्तो भवति । अतो विशेषेण चक्षुरादिनाडीद्वारैर्बाह्यविषयभोगायाऽप्रसृतानि करणान्यस्य

---

आ॰ उपसंहृतेति । विशेषणान्तरमुत्थाप्य व्याकरोति। यत इति। उपसंहृतसर्वकरणत्वादिति यावत् । अत्र विशेषणद्वयमुपभोग्य स्वप्नमित्यादि व्याचष्टे । यत इति । नाडीषु प्रविष्टो भवतीति यदुक्तं तदयुक्तं । य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत इत्यङ्गीकारादित्याशङ्क्याह । नाडीभिरिति । नाडीष्विति श्रुता सप्तमी । सा च नाडीभिरिति तृतीया व्याख्यायते यस्मादतः । न हीति । तदेवदिति सुषुप्तस्योच्यते । तस्यामवस्थायां कर्माभावे कथं पुनरुत्थानमित्याशङ्क्याह । देहेति । सुखदुःखानुभवाभावात्पाप्मास्पर्शोऽत्र विवक्षितो न तु कर्माभावादित्यर्थः । अविषयत्वं साधयति । अन्यो हीति । सुषुप्ते स्वरूपावस्थस्य कथं प्रच्यवनमित्याशङ्क्याह । स्वरूपेति ।

उ॰ रीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वमाक्रमते स ओमिति वा होद्वामीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं वि-

भा॰ तदा भवन्ति। तस्मादयं करणानां निरोधात्स्वात्मन्येवावस्थितः स्वप्नं न विजानातीति युक्तं ॥ तत्रैवं सत्यथ यत्र यस्मिन् काले बलिमानमबलभावं देहस्य रोगादिनिमित्तं जरादिनिमित्तं वा क्षणोभावमेतन्नयनं नीतः आपितो देवदत्तो मुमूर्षुर्यदा भवतीत्यर्थः। तमभितः सर्व्वतो वेष्टयित्वाऽऽसीना ज्ञातय आहुर्जानासि मां तव पुत्रं। जानासि मां पितरं वेत्यादि। स मुमूर्षुर्यावदस्माच्छरीरादनुत्क्रान्तोऽनिर्गतो भवति तावत्पुत्रादीन् जानाति। अथ यत्र यदैतत्क्रियाविशेषणमित्यस्माच्छरीरादुत्क्रामति। अथ तदैतैरेव यथोक्ता रश्मिभिरूर्द्ध्वमाक्रमते यथा कर्म्मजितं लोकं।

व्या॰ अविद्याकामकर्म्मणा बीजमनाद्यज्ञानं तस्य ब्रह्मविद्याख्येनाग्निना संपिदाहस्तन्निमित्तं सुषुप्तस्य पुनः स्वरूपप्रच्यवनमिति सम्बन्धस्तदेव व्याचष्टे। जाग्रदिति॥ कीदृक्प्रच्यवनमित्यपेक्षायामाह। बाह्येति॥ एतच्च सति सम्पद्य न विदुरित्यादावुदितमित्याह। हृदयवोचामेति॥ तेजसा ह्येति पाप्मास्पर्श्यैतो हेतुस्तं हेतुं व्याचष्टे। यदेति॥ तदापत्तिकार्य्यमाह। अत इति॥ कार्य्यकरणसंस्पर्शाभावफलं दर्शयति। तस्मादिति॥ नाडीरेवं स्तुत्वा ताभिरूर्द्ध्वगमनं प्रदर्शयितुं मरणकालं प्रपञ्चयति॥ तत्रेति॥ तत्रैवार्थमाह। एवं सतीति॥ नाडीनामुक्तरीत्या प्राणस्थे सतीत्यर्थः। ताभिरूर्द्ध्वगमनप्रदर्शनप्रारम्भार्थोऽथशब्दः। रोगादीत्यादिपदमागन्तुकसर्व्वनिमित्तसंग्रहार्थं

उ॰ दुषां प्रपदनं निरोधोऽविदुषां ॥ ५ ॥

---

भा॰ प्रेत्य विद्वान् । इतरस्तु विद्वान्दहरोक्तसाधनसम्पन्नः स ओं इत्योङ्कारेणात्मानं ध्यायन् यथापूर्वं वा ह । एवं ऊर्ध्वं वा विद्वांश्चेदितरस्तिर्य्यङ्ङित्यभिप्रायः । मीयते प्रमीयते गच्छतीत्यर्थः । स विद्वानुत्क्रमिष्यन्यावत्क्षिप्येन्मनो यावता कालेन मनसो क्षयः स्यात्तावता कालेनादित्यं गच्छति प्राप्नोति क्षिप्रं गच्छतीत्यर्थो न तु तावतैव कालेनेति विवक्षितं। किमर्थमादित्यं गच्छतीत्युच्यते। एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारं य आदित्यस्तेन द्वारभूतेन ब्रह्मलोकं गच्छति विद्वान्। अतो विदुषां प्रपदनं प्रपद्यन्ते ब्रह्मलोकमनेन द्वारेणेति प्रपदनं। निरोधनं निरोधोऽस्मादादित्यादविदुषां भवतीति निरोधः ।

---

आ॰ अथादीत्यादिवाक्यं तु नैसर्गिकसर्वनिमित्तद्योतनार्थमिति भेदः । उत्क्रमणमिति क्रियाविशेषणं । प्रारब्धकर्म्मावसानार्थोऽथशब्दः । एतदिति क्रियाविशेषणमेतदुत्क्रमणं यथा स्यात्तथेत्यर्थः । यथोक्ताभिर्नाडीषु प्रवृत्ताभिरादित्यमयूखादाततादिभिरिति यावत् । कर्म्मणा जितं वर्षिष्ठं स्वात्मसम्बन्धितामापादितं लोकमनतिक्रम्य तं प्रेत्य विद्वान् केवलकर्म्मवान् गच्छतीत्यर्थः । दहरविद्यावतो गतिं दर्शयति । इतरस्त्विति । यथोक्तसाधनं दहरविज्ञानं तेन सम्पन्नो विशिष्ट इत्यर्थः । स ध्यायन्गच्छतीत्युत्तरत्र सम्बन्धः । यथा पूर्वं स्वप्नावस्थायामिव मरणावस्थायामपीत्यर्थः । वा हेति निपातद्वयस्यावधारणरूपमर्थं कथयति । एवेति । उच्छब्दार्थमाह । ऊर्ध्वमिति । वाशब्देन द्योतितं विकल्पं दर्शयति । विद्वांश्चेदिति । यदि विद्वान् प्रमीयते तदोर्ध्वमेव गच्छति । यदि त्वविद्वान् प्रमीयते तदा तिर्य्यगेव गच्छतीति विभागः ॥

उ० तदेष श्लोकः शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका । तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥ ६ ॥ ६ ॥

---

भा० सौरेण तेजसा देहे एव निरुद्धाः सन्तो मूर्द्धन्या नाड्या नोत्क्रामन्त एवेत्यर्थः ॥ ५ ॥

विष्वङ्ङन्या इति श्लोकादेतस्मिन्नर्थे एष श्लोको मन्त्रो भवति । शतञ्चैका चैकोत्तरशतं नाड्यो हृदयस्य मांसपिण्डभूतस्य सम्बन्धिन्यः प्रधानतो भवन्ति । आसन्त्या-देहे नाडीनां तासामेका मूर्द्धानमभिनिःसृता विनिर्गता तयोर्द्ध्वमायन् गच्छन्नमृतत्वममृतभावमेति विष्वङ्नानागत-यस्तिर्य्यग्विसर्पिण्य ऊर्द्ध्वगाश्चान्या नाड्यो भवन्ति संसार-गमनद्वारभूता न त्वमृतत्वाय किं तर्ह्युत्क्रमणे एवो-त्क्रान्त्यर्थमेव भवन्तीत्यर्थः । द्विरभ्यासः प्रकरणसमा-प्त्यर्थः ॥ ६ ॥

---

आ० विदुषस्त्यक्तदेहस्यादित्यप्राप्तावन्तरैश्वर्यं दर्शयितुमनन्तरवाक्य-मादत्ते किं स्यादित्यत आह । अत इति । अविदुषामपि तर्हि प्राणानामादित्यं ततो निरुद्धाना पुनर्ब्रह्मलोकप्राप्तिरित्याश-ङ्क्याह । सौरेणेति ॥ ५ ॥

देहे निरुद्धाना मूर्द्धन्यया नाड्या नोत्क्रमणमविदुषामित्यत्र लिङ्गं दर्शयति । विष्वङ्ङिति । यथोक्तार्थे नाडीविभागलक्षण-प्रधानान्त इति विशेषणतात्पर्यमाह । आसन्त्यादिति ॥ प्रकरण नाडीविषयं हृदयविद्याविषयं वा ॥ ६ ॥

उ॰ य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्यस्तमात्मानम-

---

भा॰ अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्युक्तं। तत्र कोऽसौ सम्प्रसादः कथं वा तस्याधिगम। यथा सोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरूप सम्पद्य स्वेन रूपेणाभिनिष्पद्यते। येन लक्षणेनाभिनिष्पद्यते स किंलक्षण आत्मा। सम्प्रसादस्य च देहसम्बन्धीनि रूपाणि ततो यदन्यत्कथं स्वरूपमित्येतेऽर्था वक्तव्या इत्युत्तरो ग्रन्थ आरभ्यते। आख्यायिका तु विद्याग्रहणसम्प्रदानविधिप्रदर्शनार्था विद्यास्तुत्यर्था च। राजसेवितं पानीयमितिवत्॥ य आत्माऽपहतपाप्मा

---

आ॰ दहरविद्यायामुपास्यस्तुत्यर्थमुक्तमनुवदति। अथेति॥ विवेकानन्तर्यमथशब्दार्थो व्याख्यात। शरीरात्समुत्थान तस्मिन्नहंममाभिमानत्याग। स्वरूप विशिनष्टि। एष इति॥ उक्तिकर्तृत्वमाचार्यस्य दर्शितमनेन॥ प्राणो वा सम्प्रसादो विज्ञानात्मा वेति संशयात्पृच्छति। तत्रेति॥ प्रकृतं वाक्य सप्तम्यर्थः। तस्य च सम्प्रसादस्य परमात्मविषय ज्ञान केनोपायेन भवतीति प्रश्नान्तरमाह। कथ वेति॥ किन्तस्य परमात्माधिगमेनेत्याशङ्क्याह। यथेति॥ तथा तस्याधिगम कथमिति सम्बन्ध। अभिनिष्पद्यमानरूपस्यात्मा सविशेषो निर्विशेषो वेति प्रश्नान्तरं करोति। येनेति॥ आत्मनो हि सच्चिदानन्दैकतानाद्यर्था-

उ॰ नुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥
तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमा-
त्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाꣳश्च
लोकानाप्नोति सर्वाꣳश्च कामानितीन्द्रो हैव देवा-

---

भा॰ विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः । यस्योपासनायोपलब्ध्यर्थं हृदयपुण्डरीकमभिहितं । यस्मिन् कामाः समाहिताः सत्या अनृतापिधाना यदुपासनसहभावि ब्रह्मचर्यं साधनमुक्तं । उपासनफलभूतकामप्रतिपत्तये च मूर्द्धन्या नाड्या गतिरभिहिता । सोऽन्वेष्टव्यः शास्त्राचार्य्योपदेशैर्ज्ञातव्यः स विशेषेण ज्ञातुमेष्टव्यो विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः । किमन्वेषणाद्विजिज्ञासनाच्च स्यादित्युच्यते स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्य्योपदेशेनान्विष्य

---

आ॰ तदादि रूपाणि दृश्यमानानि शरीरसम्बन्धप्रयुक्तानि । तथा च ततः शरीरादुपाधेर्व्यतिरिक्तस्य स्वरूपं सत्यं सर्वप्रमाणाऽप्रतिपन्नमस्तीति प्रश्नान्तरमाह । सम्प्रसादस्य चेति ॥ एतेषां प्रश्नानामुत्तरत्वेन श्रुतिमवतारयति । य आत्मेति ॥ प्रजापतेरिन्द्रविरोचनयोश्च संवादरूपा याऽऽख्यायिका दृश्यते सा किमर्थेत्याशङ्क्याह । आख्यायिका त्विति ॥ शिष्यस्य विद्याग्रहणे गुरोश्चास्याः सम्प्रदाने च यो विधिः ब्रह्मचर्यादिप्रकारस्तत्प्रदर्शनार्थेति यावत् । तदा विद्यायाः महत्त्वं लोकवच्च यत्र सम्प्रदाने तद्ग्रहणे च शिष्ये दृश्यते तस्य विधिर्ब्रह्मचर्यादिसम्प्रदर्शनार्थः । आख्यायिकायास्तात्पर्यमाह । विद्येति ॥

उ॰ नामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥ तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमू-

---

भा॰ विजानाति स्वसंवेद्यतामापादयति तस्यैतत्सर्वलोककामावाप्तिः। सर्वात्मताफलं भवतीति ह किल प्रजापतिरुवाच। अन्वेष्टव्यो विजिज्ञासितव्य इति चैष नियमविधिरेव नापूर्वविधिः। एवमन्वेष्टव्यो विजिज्ञासितव्य इत्यर्थः। दृष्टार्थत्वादन्वेषणविजिज्ञासनयोः। दृष्टार्थत्वञ्च दर्शयिष्यति नाहमत्र भोग्यं पश्यामीत्यनेनासकृत्। पररूपेण च देहादिधर्मैरवगम्यमानस्यात्मनः स्वरूपाधिगमे विपरीताधिगमनिवृत्तिर्दृष्टं फलं। इति नियमार्थतैवास्य विधेर्युक्ता न त्वग्निहोत्रादीनामिवापूर्वविधित्वमिह सम्भवति। तद्धोभय इत्याख्यायिकाप्रयोजनमुक्तं ॥ तद्ध किल प्रजापतेर्वचनमुभये देवासुराः। देवाश्चासुराश्च देवासुरा अनु परम्परागतं स्वकर्णगोचरापन्न-

---

आ॰ प्रजापतिना प्रोक्ता देवैरसुरैश्च प्रार्थिता इन्द्रविरोचनाभ्यां देवासुराधिपतिभ्यामायासेन महता प्रेप्सिता देवराजेन च कथञ्चित्प्राप्ता। तस्मान्महार्हैव विद्येति मत्वा स्तुत्यर्थाऽऽख्यायिकेत्यर्थः। महद्भिरायासितस्य महार्हत्वे दृष्टान्तमाह। राजसेवितमिति। यन्मायोपाधि सविशेषं चैतन्यं तदेव निरुपाधि निर्विशेषमिति। सविशेषनिर्विशेषयोरभेदाभिप्रायेण प्रजापतिवाक्यं व्याकर्त्तुमादत्ते। य आत्मेति। तत्र सोऽन्वेष्टव्य इति वाक्ये सम्बन्धार्थमाह। यस्येति। उपासनमपि किमर्थमित्यपेक्षायामाह। उपलब्ध्यर्थमिति। तस्यैतत्फलमिति सम्बन्धः। कथ

उ॰ पतुस्तौ ह प्रजापतिरुवाच किमिच्छन्तावबास्त-
मिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो
विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्य-

---

भा॰ मनुबुबुधिरेऽनुबुद्धवन्तः। ते चैतत्प्रजापतिवचो बुध्वा किम-
कुर्वन्नित्युच्यते। ते होचुरुक्तवन्तोऽन्योन्यं देवाः स्वपरिषद्य-
सुराश्च। हन्त यद्यनुमतिर्भवतां प्रजापतिनोक्तमात्मान-
मन्विच्छामोऽन्वेषणं कुर्मो यमात्मानमन्विष्य सर्वांश्च
लोकानाप्नोति सर्वांश्च कामानित्युक्त्वा इन्द्र एव राजैव
स्वयं देवानामितरान्देवांश्च भोगपरिच्छदांश्च सर्वान्
स्थापयित्वा शरीरमात्रेणैव प्रजापतिं प्रत्यभिप्रवव्राज
प्रगतवान्। तथा विरोचनोऽसुराणां विनयेन गुरवोऽभि-
गन्तव्या इत्येतद्दर्शयति। त्रैलोक्यराज्याच्च गुरुतरा
विद्येति। यतो देवासुरराजौ महार्हभोगार्हौ सन्तौ
तौ तथा गुरुमभ्युपगतवन्तौ। तौ ह किलासंविदाना-
वेवान्योन्यं संविदमविकुर्वाणौ विद्याफलं प्रत्यन्योन्यमीर्ष्या

---

टा॰ निर्गुणविद्यायाः सर्वलोककामावाप्तिः फलमित्याशङ्क्याह।
सर्वात्मतेति। परिच्छेदप्रमयाभावात् सर्वात्मतैवावाप्तिरिति-
त्यर्थः। प्रजापतिवाक्यस्यातीदमात्रविधित्वमुपसंहरति। अन्वेष्टव्य
इति। एवकारस्यार्थं दर्शयति। नापूर्वविधिरिति। शब्दा-
देव विदोदये तदुपायत्वेऽपूर्वविधिरपि वेदनादिविधिवत्
सम्भवतीत्यर्थः। कथमिव नियमविधिरपि स्यादत आह विधिव-
दित्याशङ्क्याह। एवमिति। मिथ्याज्ञानसंस्कारप्राबल्यादना-
त्माभिनिवेशस्य पक्षे प्राप्तौ ज्ञानाय शास्त्राच्चाचार्याच्चात्मावगममेव
कार्यमिति नियम इत्यर्थः। अतश्च नियमविधिरेव नापूर्वविधि

उ॰ कामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्

---

भा॰ दर्शयन्तौ समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशमाजग्मतुरागतवन्तौ। तौ ह गत्वा द्वात्रिंशत वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यमूषतुरुषितवन्तौ। अभिप्रायज्ञः प्रजापतिस्तावुवाच किमिच्छन्तौ प्रयोजनमभिप्रेत्येच्छन्तावावास्तमुषितवन्तौ युवामितीत्युक्तौ तौ होचतुः। य आत्मेत्यादि भगवतो वचो वेदयन्ते शिष्टा अतस्तमात्मानं ज्ञातुमिच्छन्तावावास्तमिति। यद्यपि प्राक्प्रजापतेः समीपागमनादन्योन्यमीर्ष्यायुक्तावभूतां तथापि विद्याप्राप्तिप्रयोजनगौरवात्त्यक्तरागद्वेषमोहेर्ष्यादि-

---

आ॰ दित्याह। दृष्टार्थत्वादिति। अन्वेषणविजिज्ञासनाभ्यां साधनमुक्तं। तस्य च विद्याद्वाराऽविद्यानिवृत्तिर्दृष्टमेव फलमन्वयव्यतिरेकाभ्यां तद्धेतुत्वावगमात्तथा च तत्र नापूर्वविधेरवकाशोऽस्तीत्यर्थः। तयोर्दृष्टफलत्वे वाक्यशेषमनुकूलयति। दृष्टार्थत्वश्चेति। कथमसत्यसङ्कल्पत्वेन पश्यामीति वर्त्तमानोपदेशेनान्वेषणादेर्दृष्टफलत्वमाशङ्क्य देहातिरिक्तात्मवादिना वाक्येनात्मानमनुमानाच्च मनुष्यत्वादिधर्मनिवृत्तिप्रसिद्धेर्नैवमित्यभिप्रेत्याह। परकल्पेऽपीति। अन्वेषणादेर्दृष्टफलत्वे फलितमाह। इति नियमार्थतेति। अपूर्वविधित्व तद्विषयत्वमिति यावत्। इष्टे त्वन्वेषणादेरकाशिदर्मिहोत्रादिवदन्वेषणादेरत्यन्ताप्राप्त्यभावस्योक्तत्वादित्यर्थः। इदानीमाख्यायिका व्याख्यातुमाख्यायिका तु विद्याग्रहणसम्प्रदानविधिप्रदर्शनार्थेत्यादिनोक्तं स्मारयति। तद्धेति। अवतारिताख्यायिकाक्षराणि व्याचष्टे। तद्धेत्यादिना। किमितीन्द्रविरोचनौ विद्यार्थिनावपि परिकर परिज्ञात्वा परो

उ॰ यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्तावावास्तमिति ॥ ३॥ तौ ह

---

भा॰ दोषावेव भूत्वोषतुर्ब्रह्मचर्यं प्रजापतौ । तेनेदं प्रख्यापितमात्मविद्यागौरवं तावेवं तपस्विनौ शुद्धकल्मषौ योग्यावुपलभ्य प्रजापतिरुवाचाह । य एषोऽक्षिणि पुरुषो निवृत्तचक्षुर्भिर्मृदितकषायैर्दृश्यते योगिभिर्द्रष्टा । एष आत्माऽपहतपाप्मादिगुणो यमवोचं पुराऽहं यद्विज्ञानात्सर्वलोककामावाप्तिरेतदमृतं भूमाख्यं । अत एवाभयमत एव ब्रह्म बृहत्तममित्येतत्प्रजापतिनोक्तं । अक्षिणि पुरुषो दृश्यत इति वचः श्रुत्वा छायारूपं पुरुषं जगृहतुः गृहीत्वा च दृढीकरणाय प्रजापतिं पृष्टवन्तौ । अथ

---

आ॰ इमावेव प्रजापतिं प्रगतवन्तौ तत्राह । विनयेनेति । तयोर्वक्तृपगतिवशादेव दर्शितमर्थान्तरं कथयति । त्रैलोक्येति । विद्येति दर्शयतीति पूर्वेण सम्बन्धः । तस्या गुरुतरत्वे हेतुमाह । यत इति । तमिदं मैत्री तमात्मानं ज्ञातुमिच्छन्तावावास्त इति वाक्यार्थेऽप्यवाक्यमिति प्रजापतिवचोऽनुवर्तमानमिति मन्तव्यं । अथ इन्द्रविरोचनयोर्मिथो वैरिणोः कथमेकत्राचरणं चिरकालमासीदित्याशङ्क्याह । यद्यपीति । देवासुरराजयोः स्वभाववैरिणोरपि विद्यार्थित्वेन चिरमेकत्र ब्रह्मचर्यवासेन सूचितमर्थं दर्शयति । तेनेति । शुद्धकल्मषौ प्रक्षालितदोषाविति यावत् । पुरुषो दृश्यत इति सम्बन्धः । अस्मदादिभिस्तत्र द्रष्टा दृष्टो नास्तीत्याशङ्क्याह । निवृत्तेति । इन्द्रियाणां विषयेभ्यो वैमुख्ये हेतुमाह । मृदितेति । योगिभिः समाधिनिष्ठैरन्तर्दृष्टिभिरिति यावत् । य आत्मेत्यादिवाक्योक्तमस्यैवात्मत्वं दर्शयति । एष इति । भूमविद्यया वाक्यैकवाक्यत्वं सूचयति । भूमाख्यमिति । इति

उ॰ प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ

भा॰ योऽयं ह भगवोऽप्सु परिख्यायते परि समन्ताख्यायते। यश्चायमादर्शे आत्मनः प्रतिबिम्बाकारः परिख्यायते। खड्गादौ च कतम एष एषां भगवद्भिरुक्तः किंवैक एव सर्वेष्विति ॥ एवं पृष्टः प्रजापतिरुवाच। एष उ एव यश्चक्षुषि द्रष्टा मयोक्त इति। एतन्मनसि कृत्वैषु सर्वेषु मध्येषु परिख्यायत इति होवाच ॥ ननु कथं युक्तं शिष्ययोर्विपरीतग्रहणमनुज्ञातुं प्रजापतेर्विगतदोषस्याचार्य्यस्य सतः। सत्यमेवं नानुज्ञातं। तथाप्यात्मन्यध्यारोपितपाण्डित्यमहत्त्वयोर्हृष्टौ इन्द्रविरोचनौ तथैव च प्रार्थितौ लोके। तौ यदि प्रजापतिना मूढौ युवां विपरीतग्राहिणा-

टी॰ प्रश्नो वाक्यसमाप्त्यर्थः। उक्तेऽर्थे वाक्यं पातयति। यश्च योऽयमिति। मन्त्रार्थोऽयमन्त्रः। इतिशब्दः समाप्त्यर्थः। यश्चक्षुरुपलक्षितो द्रष्टा एष एव मयोक्तोऽपहतपाप्मत्वादिधर्म्मवानात्मा युवाभ्यां पुनरन्यथा गृहीतमिति निपातेन सूचयन्नुक्तवान्प्रजापतिरित्याह। एवमिति। प्रजापतिश्चेदेवमुक्तवान् कथं तर्हि तयोर्वैमुख्यं न निरस्तमित्याशङ्क्याह। एतदिति। यथोक्तावबोधरूपं वस्त्विति यावत्। यत्प्रजापतिना मनसि निहितं तत्प्रकटीकर्तुं चोदयति। नन्विति। शिष्टशिष्यमतं विपरीतग्रहणमाचार्य्येणानुज्ञातुमयुक्तमित्यङ्गीकृत्य प्रजापतेरभिप्रायमाह। सत्यमेवमिति। कथं तर्हि तयोर्विपरीतग्रहणमननेतव्यमित्याशङ्क्याह। प्रक्षीबामिति। तावद्विपरीतमिति शेषः। चकारेण क्रियापदमनुकृष्यते। [illegible]

उ॰ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवेषु सर्वेष्वेतेषु परिख्यायत इति होवाच ॥ ४ ॥ ७ ॥

---

भा॰ विप्लुतौ स्यातां ततस्तयोश्चित्तदुःखं स्यात्तज्जनिताच्च चित्तावसादात्पुनः प्रश्नश्रवणग्रहणावधारणं प्रत्युत्साह-विघातः स्यादतो रक्षणीयौ शिष्याविति मन्यते प्रजापतिः । गृहीतं तावत्तदुदशरावदृष्टान्तेनापनेष्यामीति च । ननु न युक्तमेष उ एवेत्यनृतं वक्तुं । न चानृतमुक्तं । कथमात्मनोऽक्षिपुरुषो मनसि सन्निहिततरः शिष्यगृहीतच्छायात्मनः सर्वेषां ह्याभ्यन्तरः सर्वान्तर इति श्रुतेः । तमेवावोचदेष उ एवेत्यतो नानृतमुक्तं प्रजापतिना । तथा च तयोर्विपरीतग्रहणनिवृत्त्यर्थं माह ॥ ४ ॥

---

था॰ न्यायेन सर्वेषां मृषावादित्वं स्यादिति शङ्कते । नन्विति । प्रजापतेरभिप्रायमेव प्रकटयन्नतिप्रसङ्गं परिहर्तुं तदीयमनृतवादित्व दूषयति । न चेति । तदेवाकाङ्क्षापूर्वकं स्फुटयति । कथमित्यादिना । शिष्याभ्यां गृहीतो योऽयमात्मा तत सकाशादात्मनो ऽक्ष्णैव प्रजापतिनोक्तो योऽक्षण्युपलक्षितो द्रष्टा स मनसि प्रजापतेः सन्निहिततरोऽतः स एव च तेनोक्त इत्यर्थः । तत्र द्रष्टा प्रजापतेर्मनसि सन्निहिततर इत्याह । सर्वेषामिति । प्रजापतेर्मनसि द्रष्टृ सन्निहितत्वेऽपि कथं तस्य न मृषावादित्वमत आह । तमेवेति । इतश्च प्रजापतेर्न मृषावादित्वमित्याह । तथा चेति ॥ ४ ॥

उ॰ उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतु सर्वमेवेदमावां भगव आत्मानं पश्याव

भा॰ उदशरावे उदकपूर्णे शरावादावात्मानमवेक्ष्यानन्तरं यत्तत्राऽऽत्मानं पश्यन्तौ न विजानीथस्तन्मे मम प्रब्रूतमाचक्षीयाथामित्युक्तौ तौ ह तथैवोदशरावेऽवेक्षाञ्चक्राते ऽवेक्षणं चक्रतुस्तथा कृतवन्तौ। तौ ह प्रजापतिरुवाच किं पश्यथ इति ननु तन्मे प्रब्रूतमित्युक्ताभ्यामुदशरावेऽवेक्षणं कृत्वा प्रजापतये न निवेदितमिदमावाभ्यां न विदितमित्यनिवेदिते चाज्ञानहेतौ ह प्रजापतिरुवाच किं पश्यथ इति। तत्र कोऽभिप्राय इति। उच्यते। नैव तयोरिदमावयोरविदितमित्याशङ्का बभूवात्मन्यात्मप्रत्ययो निश्चित एवासीत्। येन वक्ष्यति तौ ह शान्तहृदयौ प्रवव्रजतुरिति। न ह्यनिश्चितेऽभिप्रेतार्थे प्रशान्तहृदयत्वमुपपद्यते। तेन नोचतुरिदमावाभ्यामविदित-

आ॰ आत्मानमुदशरावेऽवेक्ष्यानन्तरमनात्मानं पश्यन्तौ तावनन्तरं यदात्मनो न विजानीथो युवां तन्मे प्रब्रूतमिति सम्बन्धः। प्रजापतिवचनमुपक्रमानुकूलं न भवतीति शङ्कते। तत्रेति। उपक्रमगतिकस्य सुगमस्य प्रजापतेरभिप्रायमाह। उच्यत इति। तत्र प्रथममिन्द्रविरोचनाभ्यामिदमविदितमिति प्रजापतिं प्रत्यवचने कारणमाह। नैवेति। छायात्मनि वादादौ तद्धेतौ शरीरे चेन्द्रविरोचनयोर्दृढात्मभावधीरिव निश्चिता इत्य-

उ० आलोमभ्य आनखेभ्यः प्रतिरूपमिति ॥ १ ॥ तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षां-

---

भा० मिति। विपरीतग्राहिणौ च मिथ्यावनुपेक्षणीयाविति स्वयमेव पृच्छति किं पश्यथ इति। विपरीतनिश्चयापनयाय च वक्ष्यति साध्वलङ्कृतावित्येवमादि। तौ होचतुः। यथैवावां हे भगवो लोमनखादिमन्तौ स्वः। एवमेवेद लोमनखादिसहितमावयोः प्रतिरूपमुदशरावे पश्याव इति। तौ ह पुनः प्रजापतिरुवाच। छायात्मनिश्चयापनयाय साध्वलङ्कृतौ यथा स्वगृहे सुवसनौ महार्हवस्त्रपरिधानौ परिष्कृतौ छिन्नलोमनखौ च भूत्वोदशरावे पुनरीक्षेयाथामितीह च नादिदेश यदज्ञातं तस्मै प्रब्रूतमिति। कथं पुनरनेन साध्वलङ्कारादि कृत्वोदशरावावेक्षणेन तयोश्छायात्मग्रहोऽपनीतः स्यात्। साध्वलङ्कारसुवसनादीनामागन्तुकानां छायाकरत्वमुदशरावे यथा

---

आ० त्यर्थः। तयोरुक्तात्मप्रत्ययस्य निश्चितत्वे गमकमाह। येनेति। प्रव्रजनेऽपि शान्तहृदययोरुक्तयोः सत्यप्रत्ययस्य कथं निश्चितत्वमित्याशङ्क्याह। न हीति। तेन विपरीतग्राहित्वेनेति यावत्। उक्तमगृहीत्वा विपरीतं गृहीतवन्तौ यदि प्रजापतिनोपेक्षणीयौ कुर्वद्भिस्तादित्याशङ्क्य प्राजापत्यमभिप्रायमाह। विपरीतग्राहिणौ चेति। कथमिदं प्रजापतेरभिमतमित्यधिगतमत आह। विपरीतेति। प्राजापत्ये प्रश्ने देवासुरराजयोर्विपरीतग्रहणम-

उ० अञ्जाते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥२॥ तौ होचतुर्य्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्व-

---

भा० शरीरसम्बन्धानामेवमेवं शरीरस्यापि छायाकरत्वं पूर्व्वं बभूवेति गम्यते । शरीरैकदेशानाञ्च लोमनखादीनां नित्यत्वेनाभिप्रेतानामखण्डितानां छायाकरत्वं पूर्व्वमासीत् । छिन्नेषु च नैव लोमनखछाया दृश्यतेऽतो लोमनखादिवच्छरीरस्यागमापायित्वं सिद्धमिति । उदशरावादौ दृश्यमानस्य तन्निमित्तस्य च देहस्यानात्मत्वं सिद्धं । उदशरावादौ छायाकरत्वाद्देहसम्बद्धालङ्कारादिवत् । न केवलमेतावदेतेन यावत्किञ्चिदात्मीयत्वाभिमतं सुखदुःखरागद्वेषमोहादि च । कादाचित्कत्वान्नखलोमादिवदनात्मेति मन्तव्यं । एवमशेषमिथ्याग्रहापनयनिमित्ते साध्वलङ्कारादिदृष्टान्ते प्रजापतिनोक्ते श्रुत्वा तथा ज्ञातवतोरपि छायात्मविपरीतग्रहो नापजगाम यस्मा-

---

चा० नुवदति । तौ हेति । तदपनयनप्रकारं सूचयति । तौ ह पुनरिति । छायायां तद्धेतौ च देहे तयोरात्मनिश्चयो यस्तस्य निरासायेति यावत् । इह चेति मर्य्यादोक्तिः । नाद्दिदेश तत्प्रयोजनाभावादित्यर्थः । उक्तोदाहरणेन छायायां देहे चेन्द्रविरोचनयोरात्मप्रत्ययो नापनीतो भवतीति प्रश्नः । कथमिति । छायादावात्मत्वारूढस्य चागन्तुकत्वादनात्मत्वमत्र विवक्षितमित्युत्तरमाह । साध्वलङ्कारेति । पूर्व्वमुदकादिसम्बन्धावस्थायामिति यावत् । व्यभिचारित्वाच्च छायात्मत्वाद्द्वयोरेवानात्मत्वमित्याह । शरीरैकदेशानामिति । उपपत्तिभ्यां सिद्धमर्थं निगमयति । अत उदशरावा-

उ० लङ्कृतौ सुवसनौ परिष्कृताविरयेष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥ तौ हान्वीक्ष्य प्रजापतिरुवाच

भा० तस्मात्स्वदोषेणैव केनचित्प्रतिबद्धविवेकविज्ञानाविन्द्रविरोचनावभूतामिति गम्यते। तौ पूर्ववदेव दृढनिश्चयौ पप्रच्छ किं पश्यथ इति। तौ तथैव प्रतिपन्नौ यथैवेदमिति पूर्ववद्यथा साध्वलङ्कारादिविशिष्टावावां स्व एवमेवेमौ छायात्मानाविति सुतरां विपरीतनिश्चयौ बभूवतुः। यस्यात्मनो लक्षणं य आत्माऽपहतपाप्मेत्युक्त्वा पुनस्तद्विशेषणमन्विष्यमाणयोर्य एषोऽक्षिणि पुरुषो दृश्यत इति साक्षादात्मनि निर्दिष्टे तद्विपरीतग्रहापनयायोदशरावे साध्वलङ्कारदृष्टान्तोऽप्यभिहित आत्मस्वरूपबोधाद्विपरीतग्रहो नापगतः। अतः स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानसामर्थ्याविति मत्वा यथाभिप्रेतमेवात्मानं मनसि निधाय एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति

आ० दाविति। न केवलं छायात्मत्वाश्रययोरेवानात्मत्वं किन्त्वाच्छादनालङ्कारादीनां तद्धर्मायाश्चात्मीयत्वं प्रत्युक्तमिति प्रसङ्गादतिदिशति। न केवलमिति। आत्मत्वाभिमतसमलङ्कारादीनि शेषः। मोक्षादरात्मीयत्वाभिमतमित्यध्याहार्यं। एवमेवेति दर्शितमेव चेमं दर्शयति। साधारणत्वादिति। यथात्मेत्यनात्मनमनात्मीयत्वोपलक्षणार्थं। तर्हि तयोर्यथाहृदीत्या विपरीतग्रहस्यापगतत्वात्किमुत्तरेण प्रश्नातिवाक्येनेत्याशङ्क्याह। पश्यामिति। तथैवेत्यस्य व्याख्यानं पूर्ववदिति। यथैवेदमिति प्रतीकमादाय तदाचष्टे। यथेति। छाया च इमौ-

उ॰ अनुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान्

---

भा॰ प्रजापतिः । पूर्ववत् । स तु तदभिप्रेतमात्मानं । य आत्मेत्याद्यात्मलक्षणश्रवणेनापि उपलभ्यानुविद्य चोदशरावाद्युपपत्त्या च व्रजतौ तावत् मद्वचनं सर्वं पुनः पुनः स्मरतः प्रतिबन्धक्षयाच्च स्वयमेवात्मविषये विवेको भविष्यतीति मन्वानः पुनर्ब्रह्मचर्यादेशे च तयोश्चित्तदुःखोत्पत्तिं परिजिहीर्षन् कृतार्थबुद्धितया गच्छन्तावप्युपेक्षितवान्प्रजापतिः । तौ चेन्द्रविरोचनौ शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धीव प्रवव्रजतुरित्यर्थः । ननु भ्रम एव भ्रमस्थयोर्जातो विपरीतपक्षो विगतोऽभविष्यत् प्रवव्रजतुर्गतभ्रमौ एव तयोर्गतयोरिन्द्रविरोचनयो रागोद्भोगासक्तयोर्यथोक्तविस्मरणं स्यादित्याशङ्क्यामत्यप्रवचनेन तयोश्चित्तदुःखं परिजिहीर्षुरसौ दूरं गच्छन्ताव-

---

आ॰ छायादर्शने यथैवेति सम्बन्धः । प्रथितवाक्यादुदशरावयाक्यात्सम्बन्धाद्वाक्याच्च छायातद्देहोऽन्यतरस्यैवात्मत्वमभ्यस्तो दिति भ्रमान्निराय एतदाभिमुख्याह । प्रजापतिवाक्यमनूद्य दति । य एषोऽक्षिणीत्यादिना । वाक्यद्वयेनात्मनिर्दिष्ट इति । पूर्ववदिति । एवमर्थेन तयोरभिप्रेतमेवात्मानं छायात्मं देहात्मं च प्रजापतिरनुमोदितवानित्याशयमाह । तम्बिति । तौ च शान्तहृदयावित्यादिवाक्यस्य तात्पर्यमाह । आत्मेत्यादीति । संस्मृतौ तावद्भवतामिति शेषः । संस्मृतयोरपि तयोरात्मविषये यथा विवेको भविष्यतीत्याशयमाह । मद्वचनमिति । उपेक्षायां कारणमाह

उ॰ जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमञ्चामु-

भा॰ वीक्ष्य च आत्माऽपहतपाप्मेत्यादिवचनश्रवणयोः श्रवणगोचरत्वमेष्यतीति मत्वोवाच प्रजापतिमनुपलभ्य यथोक्तलक्षणमात्मानमननुविद्य स्वात्मप्रत्यक्षत्वाच्छ्रुत्वा विपरीतनिश्चयौ च भूत्वेन्द्रविरोचनावेतौ प्रव्रजतो गच्छेयातां। अतो यतरे देवा वाऽसुरा वा किं विशेषितेनैतदुपनिषद आभ्यां या गृहीताऽऽत्मविद्या सेयमुपनिषद्येषां देवानामसुराणां वा त एतदुपनिषद एव विज्ञाना एतन्निश्चया भविष्यन्तीत्यर्थः । ते किं पराभविष्यन्ति श्रेयोमार्गात्पराभूता बहिर्भूता विनष्टा भविष्यन्तीत्यर्थः । स्पष्टं गच्छतोः सुरासुरराजयोर्योऽसुरराजः स ह शान्तहृदय एव सन् विरोचनोऽसुराञ्जगाम । गत्वा च तेभ्यो ऽसुरेभ्यः शरीरात्मबुद्धिर्योपनिषत्तामेतामुपनिषदं प्रो-

आ॰ शान्तरमाह। पुनरिति । किमिति शान्तहृदयत्व तुष्टहृदयत्वेन व्याख्यायते हृदयगत श्रम एव किं न विवक्ष्यते तत्राह। मत्वेति। यदि प्रजापतिस्तावुपेक्षितवान् किमिति तर्हि तौ छान्दोग्ये त्यादिवाक्यमित्याशङ्क्याह । राज्ञोरिति । प्रजापतिरुवाचेति सम्बन्ध । तर्हि किमिति तावाहूय नोक्तवानित्याशङ्क्याह । प्रत्यक्षवचभेनेति । कार्त्स्न्येन सम्बन्धार्थमुक्तमेव पुनरनुवदति । य आत्मेति । किमसावुपिवानित्यपेक्षायामाह । अनुपलभ्येति । यथोक्त . . . श्रुत्वापि गच्छतोरिन्द्रविरोचनयोर्विरोचनगत . . . विशेषमाह । स्पष्टमिति । पिता-

उ॰ चेति ॥४॥ तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणाᳲ ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति सᳲस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥५॥८॥

---

भा॰ वाचोक्तवान् । देहमात्रमेवात्मा पित्रोक्त इति । तस्मादात्मैव देह इह लोके महय्यः पूजनीयस्तथा परिचर्यः परिचरणीयस्तथात्मानमेवेह लोके देहं महयन् परिचरन्नुभौ लोकाववाप्नोतीमं चामुं च । इहलोकपरलोकयोरेव सर्व्वे लोकाः कामाश्चान्तर्भवन्तीति राज्ञोऽभिप्रायः ॥ तस्मात्तत्सम्प्रदायोऽद्याप्यनुवर्त्तत इतीह लोके ऽददानं दानमकुर्वाणमविभागशीलं । अश्रद्दधानं सत्कार्य्येषु श्रद्धारहितं यथाशक्ति । अयजमानमयजनस्वभावमाहुः । आसुरोऽसुरः खल्वयं यत एवं स्वभावो बतेति खिद्यमाना आहुः शिष्टाः । असुराणां हि यस्मादश्रद्दधानतादिलक्षणैषोपनिषत् । तयोपनिषदा संस्कृताः सन्तः प्रेतस्य शरीरं कुणपं भिक्षया गन्धमाल्यान्नादिलक्षणया

---

व्या॰ तथोक्तेऽपि किमस्माभिरत्र कर्त्तव्यमित्याशङ्क्याह । तस्मादिति । तथा पूजनीयत्ववदिति यावत् । तथापि प्रार्थिता सर्व्वलोककामावाप्तिरसिद्धेत्याशङ्क्याह । इहलोकेति । विरोचनसम्प्रदायस्यानवच्छिन्नत्वं दर्शयति । तस्मादिति । देहात्मवादस्याद्यत्वादिदिति यावत् । तत्सम्प्रदायश्चैषा विरोचनप्रभृतीनामसुराणां सम्प्रदायो देहात्मत्वोपदेशः । किमित्यात्मत्वादिर

उ० अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतः एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः

भा० वसनेन वस्त्रादिप्रकारेणालङ्कारादिकरणेन ध्वजपताकादिकरणेनेत्येवं संस्कुर्वन्त्येतेन कुणपं संस्कारेणामुं प्रेत्य प्रतिपत्तव्यं लोकं जेष्यन्तो मन्यन्ते॥ ८॥

अथ ह किलेन्द्रोऽप्राप्यैव देवान्। दैव्याऽक्रौर्य्यादिसम्पदा युक्तत्वाद्गुरोर्वचनं पुनः पुनः स्मरन्नेव गच्छन्नेतद्वक्ष्यमाणं भयं छायात्मग्रहणनिमित्तं ददर्श दृष्टवान्। उदशरावदृष्टान्तेन प्रजापतिना यदर्थो न्याय उक्तस्तदेकदेशो मघवतः प्रत्यभाद्बुद्धौ। येन छायात्मग्रहणे दोषं ददर्श। कथं। यथैव खल्वयमस्मिञ्छरीरे साध्व-

आ० पितृमातृत्रमाऽङ्गरित्यपेक्षायामाह। अवसनायां हीति। प्रकृतोपनिषत्कार्य्यं कथयति। तस्येति। ८।

एवं विरोचनगतं विभ्रमं दर्शयित्वा देवराजगामिनं विवेकमाह। अथेत्यादिना। द्वयोस्तुल्यत्वेऽपि प्राजापत्यवाक्यश्रवणे देवराजस्यैव कथं धीः तदनुसन्धानवत्त्वमित्याशङ्क्याह। दैव्येति। स्मरणप्रकारमाह। स्मरन्नेवेति। प्रजापतिवचनं स्मरतोऽपि कथमिन्द्रस्य छायात्मग्रहणे दोषदर्शनमित्याशङ्क्याह। उदशरावेति। यदर्थो देहादेरनात्मत्वज्ञापनार्थेति यावत्। आदर्शादिप्रत्यभिज्ञानित्वादिर्न्यायः। तदेकदेशोऽत्र व्यभिचारित्वं नानात्वं। न्यायैकदेशदृष्टिफलमाचष्टे। येनेति। दोषदर्शनमेवाकाङ्क्षाद्वारा स्फोरयति। कथमित्यादिना। उदाहृते वाक्ये

उ० परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाऽहमत्र भोग्यं पश्यामीति ॥ १ ॥ स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरु-

---

भा० स्वलङ्कृते छायात्मापि साध्वलङ्कृतो भवति सुवसने च सुवसनः परिष्कृते परिष्कृतः। यथा नखरोमादिदेहावयवापगमे छायात्मापि परिष्कृतो भवति। नखरोमादिरहितो भवति। एवमेवायं छायात्माप्यस्मिञ्छरीरे नखलोमादिभिर्देहावयवत्वस्य तुल्यत्वादन्धे चक्षुषोऽपगमेऽन्धो भवति स्रामे स्रामः किंचैकनेत्रस्य स्रामत्वेन गतत्वाच्चक्षुर्नासिका वा यस्य सदा स्रवति स स्रामः। परिवृक्णश्छिन्नहस्तश्छिन्नपादो वा। स्रामे परिवृक्णे देहे छायात्मापि तथा भवति। तथाऽस्य देहस्य नाशमन्वेष नश्यति। अतो नाहमत्रास्मिञ्छायात्मदर्शने देहात्मदर्शने वा भोग्यं फलं पश्यामीति। एवं दोषं देहे छाया-

---

आ० विवक्षितमर्थं कथयति। यथेति। परिष्कृतो भवतीत्येतद्व्याचष्टे। नखेति। एवमेव देहस्य नखाद्यपगमे छायात्मनोऽपि तदपगमवदित्यर्थः। शरीरेऽस्मिन्नन्धे सति छायात्माप्यन्धो भवतीति सम्बन्धः। किमिति देहस्यान्धे छायात्मनस्तदिष्टमित्याशङ्क्याह। नखरोमादिभिरिति। तैः सह चक्षुरादीनां तुल्यत्वाद्देहावयवत्वस्य देहे नखाद्यभावे छायायामपि तदभावाभ्युपगमाद्देहे चक्षुराद्यभावेऽपि छायाया तदभावो युक्त इत्यर्थः। स्रामशब्दस्यापुनरुक्तमर्थं कथयति। स्राम किञ्चेति। पदार्थमुक्त्वा वाक्यार्थमाह। स्राम इति। पारतन्त्र्यादनात्मत्वं छायाया दर्शयित्वा तत्रैव हेत्वन्तरमाह। तथेति। विनाशि-

उ० वाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्द्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलङ्कृते

---

भा० दोषदर्शने चाध्युवास समित्पाणिर्ब्रह्मचर्यं वस्तुं पुनरेयाय । तं ह प्रजापतिरुवाच । मघवन् यच्छान्तहृदयः प्राव्राजीः प्रगतवानसि विरोचनेन सार्द्धं किमिच्छन् पुनरागम इति । विजानन्नपि पुनः पप्रच्छ इन्द्राभिप्रायाभिव्यक्तये । यद्वेत्थ तेन मोपसीदेति यदुक्तवा च स्वाभिप्रायं प्रकटमकरोत् । यथैव खल्वयमित्याद्येवमेवेति चान्वमोदत्प्रजापतिः । ननु तुल्योऽक्षिपुरुषश्रवणे देहच्छायामिन्द्रोऽग्रहीदात्मेति देहमेव तु विरोचनस्तत्किन्निमित्तं तत्र मन्यते । यथेन्द्रस्योदशरावादिप्रजापतिवचनं स्मरतो देवानप्राप्तस्यैवाचार्य्योक्तबुद्ध्या छायात्मग्रहणं तत्र दोषप्रदर्शनस्याभूत् न तथा विरोचनस्य किन्तर्हि

---

आ० स्वादियुक्तिदर्शनफलमुपसंहरति । अत इति । दोषं दृष्ट्वा यथोक्तरीत्या किं कृतवानित्यपेक्षायामाह । इत्येवमिति । सर्वज्ञो हि प्रजापतिरिन्द्राभिप्रायं जानन्नेव किमर्थं प्राक्तनवत्पृच्छतीत्याशङ्क्याह । विजानन्नपीति । आचार्य्यस्य प्रागवस्तोऽपि शिष्यं प्रत्यभिप्रायं विशेषेण ज्ञातुं प्रश्नोपपत्तौ दृष्टान्तमाह । यद्वेत्थेति । तथाच प्रजापतिप्रश्नानुरोधेनेति यावत् । इन्द्रविषयः प्रश्नः । शिष्ययोः श्रवणसाम्येऽपि प्रतिपत्तिवैषम्ये निमित्तं पृच्छति । नन्विति । आचार्य्यमतोपन्यासद्वारा परिहरति । तथेति । तत्र प्रतिपत्तिविशेषे दृष्टान्तेन निमित्तविशेषं दर्शयति । यथेति । आचार्य्योक्तबुद्ध्या तात्पर्य्येण प्रजापतिना

उ० साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं

---

भा० देह एव त्वात्मदर्शनं। नापि तत्र दोषदर्शनं बभूव। तद्देव विद्याग्रहणसामर्थ्ये प्रतिबन्धदोषादल्पत्वबहुत्वापेक्षमिन्द्रविरोचनयोश्छायात्मदेहयोर्ग्रहणं। इन्द्रोऽल्पदोषत्वाद्दृश्यत इति श्रुत्यर्थमेव श्रद्दधानतया जग्राहेतरश्छायात्मनिमित्तं देहं हित्वा श्रुत्यर्थं लक्षणया जग्राह प्रजापतिनोक्तोऽयमिति दोषभूयस्त्वात्। यथा किल नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्ममाहमिति छायानिमित्तं वास एवोच्यते न छाया तद्वद्विरो-

---

आ० छायात्मैवोक्त इति भाष्येऽर्थः। विरोचनस्येन्द्रवच्छायात्मग्रहणमाचार्योक्तबुद्ध्या माभूदित्याह। न तथेति। कथं तर्हि तस्यात्मदर्शनमित्याशङ्क्याह। देह एवेति। आचार्येणात्मा देह एवोक्त इति बुद्ध्या तत्रैव विरोचनस्यात्मत्वज्ञानमासीदित्यर्थः। इन्द्रस्य छायात्मग्रहणे देवानप्राप्तस्यैव मार्गमध्ये दोषदर्शनवद्विरोचनस्यासुरानप्राप्तस्याध्वनि देहात्मदर्शने दोषप्रदर्शनस्य न प्रवृत्तमित्याह। नापीति। दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह। तद्देवेति। विद्याग्रहणोपायिकस्य सामर्थ्यस्य प्रतिबन्धभूतो यो रागादिदोषस्तदल्पत्वापेक्षमिन्द्रस्य छायायामात्मग्रहणमित्युक्तं व्यक्तीकरोति। इन्द्र इति। यदोक्तदोषभूयस्त्वापेक्षं प्रकृतो विरोचनस्याभिप्रायं दृष्टान्तेन दर्शयति। यथेत्यादिना। उक्तमर्थं दृष्टदारुणश्रुत्यवष्टम्भेन स्पष्टयति। खचितेति। देवान्मनुष्यानसुरांश्च प्रजापतिना दत्तोपदेशसाधारण्येन दत्तं तेषां तदीयश्रवणे तुल्येऽपि तदर्थ-

उ० पश्यामीति ॥२॥ एवमेवैष मघवन्निति होवाचै-
तन्त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि
द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं
वर्षाण्युवास तस्मै होवाच ॥ ३ ॥ ९ ॥

भा० चनाभिप्रायः । स्वचित्तगुणदोषवशादेव हि शब्दार्थाव-
धारणं तुल्येऽपि श्रवणे ख्यापितं । दाम्यत दत्त दयध्व-
मिति दकारमात्रश्रवणाच्छ्रुत्यन्तरे निमित्तान्यपि तदनु-
गुणान्येव सहकारीणि भवन्ति । एवमेवैष मघवन् सम्यक्
त्वयावगतं न छायात्मेत्युवाच प्रजापतिर्यो मयोक्त आत्मा
प्रकृत एतमेवमात्मानन्तु ते भूयः पूर्वं व्याख्यातमप्यनु-
व्याख्यास्यामि । यस्मात्सकृद्व्याख्यातं दोषरहितानामवधा-
रणविषयप्राप्तमपि नागृहीतमतः केनचिद्दोषेण प्रति-

था० विशेषावधारणं स्वचित्तगुणदोषवशादेव स्वबृहदारण्यके ख्यापितं
तथेदानीमित्यर्थः । ननु वा कथं तुल्येऽपि श्रवणेऽर्थविशेषबुद्धिरित्य-
त्राह । दाम्यतेति । यदान्ता हि वयं स्वभावतस्तेन दाम्यतेत्यस्मान्प्रति
पितोक्तवानिति देवानां मतिरासीत् । स्वभावतो लुब्धा
वयं तेन दत्तेत्यस्मान्प्रत्युक्तवानिति मनुष्याणां बुद्धिरासीत् ।
क्रूरा हि वयं स्वभावतस्तेन दयध्वमित्यस्मान्प्रजापतिः सूचित-
वानित्यसुराणां प्रतिपत्तिर्बभूव । तदेव दकारमात्रश्रवणात्प्राप्त-
स्वचित्तानुरोधेन विविधा तेषां मनीषा प्रवृत्ता तथेन्द्रविरो-
चनयोरपि भविष्यतीत्यर्थः । यथेन्द्रविरोचनयोर्बुद्धिदर्शना-
विशेषादर्थप्रतिपत्तेरव्यविशेषः स्यादिति चेत्तत्राह । निमि-
त्तान्यपीति । बुद्धिदर्शनान्यपि स्वचित्तगुणदोषानुसारेणा-
पेक्षान्यतमयोरापादयेत्तु प्रतिपत्तिवैषम्यमविरुद्धमित्यर्थः । इन्द्रा-
भिप्राय बुद्धा प्रजापतिरनुमोदितवानित्युक्तमिदानीमनुमोदि

उ० य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदं शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो न वैषोऽस्य दोषेण दुष्यति ॥ १ ॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि

---

भा० बहुब्रह्मचर्यसामर्थ्यक्षपणीय वसापराणि द्वात्रिंशत वर्षाणीत्युक्त्वा तथोषितवते क्षपितदोषाय तस्मै होवाच ॥८॥

य आत्माऽपहतपाप्मादिलक्षणो य एषोऽक्षिणीत्यादिना व्याख्यात एष सः। कोऽसौ। यः स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरत्यनेकविधान् स्वप्नभोगाननुभवतीत्यर्थः। एष आत्मेति होवाचेत्यादि समानम्। सहैवमुक्त इन्द्रः शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवान् पूर्ववदस्मिन्नप्यात्मनि भयं ददर्श। कथं तदिदं शरीरं यद्यप्यन्धं भवति स्वप्नात्मा योऽनन्धः स भवति। यदि

उ॰ पश्यामीति ॥२॥ एवमेवैष मघवन्निति होवाचै-
तन्त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि
द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं
वर्षाण्युवास तस्मै होवाच ॥ ३ ॥ ९ ॥

---

भा॰ इत्यभिप्रायः । स्वचित्तगुणदोषवशादेव शिष्यस्यार्थाव-
धारणं तुल्येऽपि श्रवणे ख्यापितं । दाम्यत दत्त दयध्व-
मिति दकारमात्रश्रवणाच्छ्रुत्यन्तरे भिन्नान्यपि तद्गु-
णान्येव सहकारीणि भवन्ति । एवमेवैष मघवन् सम्यक्
त्वयावगतं न छायात्मेत्युवाच प्रजापतिर्यो मयोक्त आत्मा
स तु एतमेवात्मानन्तु ते भूयः पूर्वं व्याख्यातमनु-
व्याख्यास्यामि । यस्मादत्राप्यात्मनो दोषरहितस्यावधा-
रणविषयप्राप्तमपि नास्त्येतमतः केनचिद्दोषेण प्रति-

---

उ॰ य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो न वैषोऽस्य दोषेण दुष्यति ॥ १ ॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि

---

भा॰ तद्ग्रहणसामर्थ्यमलमतस्तत्क्षपणीयं वसापराणि द्वात्रिंशतं वर्षाणीत्युक्त्वा तथोषितवते क्षपितदोषाय तस्मै होवाच ॥९॥

य आत्माऽपहतपाप्मादिलक्षणो य एषोऽक्षिणीत्यादिना व्याख्यात एष सः। कोऽसौ। यः स्वप्ने महीमानः स्त्र्यादिभिः पूज्यमानश्चरत्यनेकविधान् स्वप्नभोगाननुभवतीत्यर्थः। एष आत्मेति होवाचेत्यादि समानं। स हैवमुक्त इन्द्रः शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवान् पूर्ववदस्मिन्नप्यात्मनि भयं ददर्श। कथं तदिदं शरीरं यद्यप्यन्धं भवति स्वप्नात्मा सोऽनन्धः स भवति। यदि

---

आ॰ स्ववाक्यं व्याकरोति । एवमेवेति ॥ इन्द्राभिप्रायविषय एष शब्दः ॥ अनुव्याख्यास्यामीत्युक्तं श्रुत्वा श्रोतुकाममुपगतमिन्द्रं प्रत्याह । यस्मादिति ॥ पूर्ववच्छायात्मदर्शनवदित्यर्थः ॥ अस्मिन्नप्यात्मनीति स्वप्नदृश्यीत्यर्थः ॥ ९ ॥

छायात्मनः शरीरानुविधायित्ववत् स्वप्नदृशस्तदनुविधायित्वं ॥ तथा च कथं पूर्ववद्दोषदर्शनमित्याशङ्क्य परिहरति । कथमित्यादिना । स्राम्येण चक्षुरादिगतानवरतसलिलस्रवणविषयत्वे-

उ० रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥ स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवेषोऽस्य दोषेण दुष्यति ॥ ३ ॥ न वधेनास्य हन्यते नाऽस्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादय-

भा० स्राममिदं शरीरमस्रामश्च स भवति नैवैष स्वप्नात्माऽस्य देहस्य दोषेण दुष्यति नाप्यस्य वधेन स हन्यते कायात्मवत्। न चाऽस्य स्राम्येण स्रामः स्वप्नात्मा भवति। यदध्यायादावागममात्रेणोपन्यस्तं नास्य जरयैतज्जीर्यतीत्यादि। तदिह न्यायेनोपपादयितुमुपन्यस्तं। न तावदयं कायात्मवद्देहदोषयुक्तः किन्तु घ्नन्ति त्वेवैनमेवशब्द इवार्थे घ्नन्ति वैनं केचनेति द्रष्टव्यं । न तु घ्नन्त्येवेत्युत्तरेषु सर्व्वेष्विवशब्ददर्शनात्। नाऽस्य वधेन हन्यत इति विशेषणात् घ्नन्तित्वेवेति चेन्नैवं । प्रजापतिं प्रमाणीकुर्व्वतोऽनृतवा-

था० मेति यावत्। देहदोषेणात्मनो न दोषो भवतीति प्रश्नेनोक्तं सविमर्षमिह पुनरुच्यतेऽत आह। यदध्यायादाविति। न्यायो ऽन्वयव्यतिरेकाख्यः एतद्देहाभिमाने हि सत्येव देहधर्म्मैरयं संयुज्यत इव यथा स्वप्ने स्थूलदेहाभिमानाभावान्न तेन संबध्यत-इत्याह। तदिहेति। स्वप्नदृष्टा चेद्देहदोषेण न युज्यते कथं तर्हि तस्मिन्दोषदर्शनमित्याशङ्क्याह। न तावदिति। किमित्येवमादिर्यथाश्रुतो न व्याख्यायते तत्राह। नत्विति। इतिशब्दो

उ॰ व्यीवाऽप्रियवेत्तेव भवत्यपि रोदितीव नाऽहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैत-

भा॰ द्विलापादनानुपपत्तेः । एतदमृतमित्येतत्प्रजापतिवचनं कथं मृषा कुर्य्यादिन्द्रस्तं प्रमाणीकुर्व्वन् । ननु छायापुरुषे प्रजापतिनोक्तेऽस्य शरीरस्य नाशमन्वेष नश्यतीति दोष-मदधात्तथेहापि स्यात् । नैवं । कस्माद्य एषोऽक्षिणि पुरुषो दृश्यत इति न छायात्मा प्रजापतिनोक्त इति मन्यते मघ-वान् । कथमपहतपाप्मादिलक्षणे पृष्टे यदि छायात्मा प्रजा-पतिनोक्त इति मन्यते तदा कथं प्रजापतिं प्रमाणीकृत्य पुनः श्रवणाय समित्पाणिर्गच्छेत जगाम च । तस्मान्न छायात्मा प्रजापतिनोक्त इति मन्यते । तथा च व्याख्यातं । द्रष्टाक्षिणि दृश्यत इति । तथा विच्छादयन्तीव विद्रावय-न्तीव तथा च पुत्रादिमरणनिमित्तमप्रियवेत्तेव भवति । अपि च स्वयमपि रोदितीव । नन्वप्रियं वेत्तैव कथं वेत्ते-

टी॰ मरत्वमित्यनेन सम्बध्यते । देहस्य वधेन नायं हन्यत इति विप-र्यासात्तत्र बध स्वप्नद्रष्टा नियमतो विवक्षित । कस्मादेव-शब्दो न यथाश्रुत एवेति शङ्कते । नास्येति । किमयं प्रजापतिमात-मनात्मं वा मन्यते । यद्यनात्मं बुध्यतेन तर्हि तं प्रत्युपगतिरिन्द्रस्य विद्याप्रदानार्थं सम्भवतीति मत्वाऽऽह । नैवमिति । विकल्पान्त-रमाह । प्रजापतिमिति । न ततो ऽन्यः स्वप्नद्रष्टा विवक्षि-तमिन्द्रस्येति शेषः । उक्तमेव स्फोरयति । एवदिति । दृष्टान्तेन शङ्कते । नन्विति । दृष्टान्तं विघटयति । नैवमिति । तद्विघ-टनप्रकारं प्रश्नपूर्व्वकं प्रकटयति । कस्मादित्यादिना । एतदेवा-काङ्क्षापूर्व्वकं प्रपञ्चयति । कथमित्यादिना । यथेन्द्रो दृश्यत

उ० न्त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि द्वात्रिंशतं वर्षाणीति स हाऽपराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥ ४ ॥ १० ॥

---

भा० वेत्त्युच्यते । न । अस्वप्नताभयत्ववचनानुपपत्तेः । ध्यायतीवेति च श्रुत्यन्तरात् । ननु प्रत्यक्षविरोध इति चेत । न । शरीरात्मत्वप्रत्यक्षवद्भ्रान्तिसम्भवात् । तिष्ठतु तावदप्रियवेत्तृत्वं न वेति नाहमत्र भोग्यं पश्यामि । स्वप्नात्मज्ञानेऽपि इदं फलं नोपलभ्यत इत्यभिप्रायः । एवमेवैष तवाभिप्रायेणेति वाक्यशेषः । आत्मनोऽस्वप्नताभयगुणवत्त्वस्याभिप्रेतत्वात् द्विरुक्तमपि न्यायतो मया यथावन्नावधारयति । तस्मात्पूर्व्ववदस्याद्यापि प्रतिबन्धकारणमस्तीति मन्वानस्त्व-

---

आ० इति श्रुत्यर्थं गृहीत्वा छायात्मानमेव गृहीतवानित्युक्तं कथमिदानीमन्यथोच्यते तत्राह । तथेति । यथेदं वाक्यमद्युपलक्षितद्रष्टृपरं तथा प्रागेव व्याख्यातं न तु स्वप्नद्रष्टरि छायात्मनीव स्पष्टा विनाशदृष्टिरित्यर्थः । यथावदुपगम्य स्वप्नद्रष्टारं घ्नन्तीव तथेति यावत् । इवशब्दमाक्षिपति । नन्विति । वेत्तृत्व विकारश्चेदसत्त्वं न स्यान्मृदादिवद्विनाशित्वप्रसङ्गात्तस्मादिवशब्दो युक्त इत्युत्तरमाह । उच्यत इति । यद्वा वेत्तीति विक्रियाश्रयत्वप्रत्यक्षविरोधादिवशब्दो न युक्त इति शङ्कते । नन्विति । अध्यासादपि प्रत्यक्षोपपत्तेर्न विकारित्वं सिद्ध्यतीति परिहरति । नेत्यादिना । नाहमित्यादि वाक्यमवतारयति । तिष्ठत्विति । न वेत्यप्रियवेत्तैव भवतीत्यर्थः । इष्टं सार्व्वलोककामावाप्तिलक्षणं विधेये प्रयत्नभावे नाध्यासिकमप्यप्रियवेत्तृत्वादिकमस्ति । यत्पुनरेकेऽप्यागतमतत्त्वदभिप्रायेणाप्रियवेत्तैव स्वप्नदृष्टा । न तु मदभिप्रायेणेति विशिनष्टि । तवेति । तत्र हेतुमाह । आत्मन इति । यथाप्रदर्शीत्यादिवाक्यतात्पर्यमाह ।

उ० तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥ स समित्पाणिः

---

भा० पणाय वर्षापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्य्यमित्यादिदेश प्रजापतिः । तथोषितवते क्षपितकल्मषायाह ॥१०॥

पूर्व्ववदेतन्त्वेव त इत्याद्युक्त्वा तद्यत्रैतत्सुप्त इत्यादि व्याख्यातं वाक्यं । अक्षिणि यो द्रष्टा स्वप्ने च महीयमानश्चरति स एषः सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स्वाभिप्रेतमेव मघवान् । तत्रापि दोषं ददर्श। कथं नाह नैव सुषुप्तस्थोऽप्यात्मा खल्वयं सम्प्रति सम्यगिदानीमात्मानं जानाति नैव जानाति। कथमयमहमस्मीति नो एवेमानि भूतानि चेति । यथा जाग्रति स्वप्ने वा । अतो विनाशमेवेति

---

आ० विनाशमपीति । तथा प्रजापतिवाक्यानुसारेणेति यावत् । १० ।

यथापूर्व्वमेतन्त्वेव ते इत्याद्युक्त्वा य एष स्वप्ने महीयमान इत्याद्युक्तं तथैवाप्येतन्त्वेवेत्युक्त्वा तद्यत्रैतदित्याह । त्रिरिष्टाधिकारिणे प्रजापतिरिति शेषः । व्याख्यातस्यैव वाक्यस्यार्थं संक्षिप्य दर्शयति । अक्षिणीति । तथापि सुषुप्तदर्शनेऽपीत्यर्थः । तदेव दोषदर्शनं प्रश्नद्वारा स्फोरयति । कथमित्यादिना ।

उ॰ पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्य-
च्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम
इति स होवाच नाह खल्वयं भगव एवꣳ
सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवे-
मानि भूतानि विनाशमेवापीतो भवति नाह-
मत्र भोग्यं पश्यामीति ॥ २ ॥ एवमेवैष
मघवन्निति होवाच एतन्त्वेव ते भूयोऽनुव्या-

---

भा॰ नाशमेवेति पूर्ववत्तद्दृष्टार्थं। अपीतोऽतिगतो भवति विनष्ट इव भवतीत्यभिप्रायः। ज्ञाने हि सति ज्ञातुः सद्भावो गम्यते नाऽसति ज्ञाने। न च सुषुप्तस्य ज्ञानं दृश्यतेऽतो विनष्ट इवेत्यभिप्रायः। न तु विनाशमेवात्मनो मन्यते ऽमृताभयवचनस्य प्रामाण्यमिच्छन् पूर्ववदेवमेवेत्युक्ता यो मयोक्तस्त्रिभिः पर्यायैस्तमेवैतं नो एवान्यचैतस्मादात्मनोऽन्यं कञ्चन किन्तर्हि एतमेव व्याख्यास्यामि। स्वल्पस्तु दोषस्तथावशिष्टस्तत्क्षपणाय दशाऽपराण्यन्यानि पञ्चवर्षाणीत्युक्तः स तथा चकार। तस्मै मृदितकषायादिदोषाय स्थानत्रयदोषसम्बन्धरहितमात्मनः स्वरूपमपहतपाप्मलादिलक्षणं मघवते तस्मै होवाच। तान्येकशतं वर्षाणि

---

व्या॰ स्वात्मानं न जानातीत्युक्तमेवाकाङ्क्षाद्वारेणाभिनयति। भाग्यमिति। तत्र वैधर्म्ये दृष्टान्तमाह। यथेति। सुषुप्तविवेकाभावे दोषमाह। च्यत इति। अपीतोऽस्तीत्येतद्व्याचष्टे नाशयति। पूर्ववदिति। कुतो ज्ञानाभावमात्रेण विनष्टत्वमित्याशङ्क्योक्तमभिप्रायं स्पष्टयति।

उ० ख्यास्यामि नो एवान्यत्रैतस्माद्वसाऽपराणि पञ्च वर्षाणीति सहापराणि पञ्च वर्षाण्युवास तान्येकशतꣳ सम्पेदुरेतत्तद्यदाहुरेकशतꣳ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्य्यमुवास तस्मै होवाच ॥ ३ ॥ ११ ॥

मघवन्मर्त्यं वा इदꣳ शरीरमात्तं मृत्युना

---

भा० समेयुः सम्पन्नानि बभूवुः । यदाहुर्लोके शिष्टा एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवासेति । तदेतद्द्वात्रिंशतमित्यादिना दर्शितमित्याख्यायिकातोऽपसृत्य श्रुत्योच्यते । एवन्तु किलैतदिन्द्रत्वादपि गुरुतरमिन्द्रेणापि महता यत्नेनैकोत्तरवर्षशतकृतायासेन प्राप्तमात्मज्ञानमतो नातःपरं पुरुषार्थान्तरमस्तीत्यात्मज्ञानं स्तौति ॥ ११ ॥

मघवन्मर्त्यं वै मरणधर्मीदं शरीरं । यन्मन्यसेऽक्ष्याधारादिलक्षणः सम्प्रसादलक्षण आत्मा यथोक्तो विनाशमेवापीतो भवतीति । शृणु तत्र कारणं । यदिदं शरीरं

---

था० ज्ञाने चेति । एवकारो यथाश्रुत एव किं न स्यादित्याशङ्क्याह । न त्विति । पूर्ववद्ब्रह्मचर्यादेशाभावे हेतुमाह । अपसृत्येति । आख्यायिकातोऽपसृत्य श्रुतिरस्य निमर्थमित्थमुपदिशतीत्याशङ्क्याह । एवन्त्विति ॥ ११ ॥

कार्यकारणपरिवेष्टितौ विश्वतैजसावुक्तौ । कारणमात्रवञ्च प्राज्ञो व्याख्यातः । सम्प्रत्यशरीरस्तुरीयमुपदेष्टुं सशरीरतां निन्दति । मघवन्निति । शरीरवदात्मनोऽपि विनाशित्वमवस्थाविशेषे

उ० तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै

भा० वै यत्पश्यसि तदेतन्मर्त्यं विनाशि। तच्चात्तं मृत्युना ग्रस्तं सन्ततमेव। कदाचिदेव म्रियत इति मर्त्यमित्युक्तेन तथा सन्त्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते इति वैराग्यार्थं विशेष इत्युच्यते। आत्तं मृत्युनेति। कथं नाम देहाभिमानतो विरक्तः सन्निवर्त्तेत इति। शरीरमित्यत्र सदेहेन्द्रियमनोभिरुच्यते। तच्छरीरमस्य सम्प्रसादस्य त्रिस्थानतया गम्यमानस्यात्मनो मरणादिदेहेन्द्रियमनोधर्मवर्जितस्येत्येतत्। अमृतस्येत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत्सावयवत्वमूर्त्तिमत्त्वे मा भूतामित्यात्मनो भोगाधिष्ठानं। आत्मनो वा सत ईक्षितुस्तेजोऽबन्नादिक्रमेणोत्पन्नमधिष्ठानं। जीवरूपेण प्रविश्य सदेवाधितिष्ठत्यस्मिन्निति वाधिष्ठानं। यस्येदमीदृशं नित्यमेव मृत्युग्रस्तं धर्माधर्मजनितत्वात्प्रियाप्रियवदधिष्ठानं तदधिष्ठितस्तद्वान् सशरीरो भवति।

---

था० दर्शितमित्याशङ्क्याह। यस्मन्यस इति॥ सशरीरो विशेषविज्ञानवान् भवत्यशरीरस्य तु विशेषविज्ञानाभावाद्विनाशभ्रमो न पुनरसौ वस्तुतो विनश्यति स्वेन रूपेणाभिनिष्पद्यत इति सम्प्रसादस्याविनाशित्ववचनादित्यभिप्रेत्य कारणमेव स्पष्टयन्नक्षराणि व्याचष्टे। यदिदमित्यादिना॥ ननु मर्त्यमित्येतावतैव मृत्युव्याप्तत्वे शरीरस्य सिद्धे किमित्यात्तं मृत्युनेति पुनरुच्यते तत्राह। कदाचिदेवेति॥ वैराग्यार्थं विशेषवचनमित्युक्तं यत्तदेव वैराग्यं किमर्थमित्याशङ्क्याह। कथमिति॥ निवर्त्तने विशेषवचनं फलवदिति शेषः॥ तदस्येत्यत्र सप्तम्यर्थमाह।

उ॰ रस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं

भा॰ अशरीरं न स्पृशतीति यन्मघवतोक्तं सुषुप्तस्थो विनाश-
मेवापीतो भवतीति तदेवेहाप्यापन्नं। नैष दोषो धर्म्मा-
धर्म्मकार्य्ययोः शरीरसम्बन्धिनोः प्रियाप्रिययोः प्रतिषेधस्य
विवक्षितत्वात्। अशरीरं न प्रियाप्रिये स्पृशत इत्यादि-
श्रुतिः। आगमापायिनोर्हि स्पर्शशब्दो दृष्टो यथा शीत-
स्पर्श उष्णस्पर्श इति। न त्वग्नेरुष्णप्रकाशयोः स्वभावभूत-
योरग्निना स्पर्श इति भवति। तथाग्नेः सवितुर्वोष्णप्रका-
शवत्स्वरूपभूतस्यानन्दस्य प्रियस्यापि नेह प्रतिषेधो विज्ञा-
नमानन्दमानन्दो ब्रह्मेति श्रुतिभ्यः। इहापि भूमैव
सुखमित्युक्तत्वात्। ननु भूम्नः प्रियस्यैकत्वेऽसंवेद्यत्वात्।
स्वरूपेणैव वा नित्यसंवेद्यत्वान्निर्विशेषत्वेति नेन्द्रस्य तदिष्टं।
नाह खल्वयं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो
एवेमानि भूतानि विनाशमेवापीतो भवति। नाहमत्र

व्या॰ पातयति। सशरीर इति। अशरीरस्य कथं सशरीरत्वमित्या-
शङ्क्याह। अशरीरेति। अविवेकतः सशरीरो भवतीति पूर्व्वेण
सम्बन्धः। यतः सशरीरोऽतएव प्रियाऽप्रियाभ्यामात्तो वै पुरुष
इति योजना। वैशब्दार्थमाह। प्रसिद्धमिति। एतच्छब्दार्थ-
मेवोत्तरवाक्यव्याख्यानेन स्फोरयति। सशरीरस्येति। ते
ममेति मन्यमानस्य सतः स्वस्य तयोः सन्ततिरूपयोरपहति-
र्नास्तीति सम्बन्धः। प्रियाप्रिययोः स्वारस्येन विनाशोऽस्ति क्षणि-
कत्वादित्याशङ्क्य सन्ततिरूपयोरित्युक्तं। इतिशब्दो वाक्यसमा-
प्त्यर्थः। अथास्य देहसम्बन्धद्वारा संसारित्वमुक्त्वा तस्यैव विद्या-
वतो देहनिवृत्तिद्वारेण मुक्तिं दर्शयति। तं पुनरिति। मुक्ते

भा॰ यानैर्वा स यदि पितृलोककामः स एकधा भवतीत्यादि-श्रुत्यैश्रुतयोऽनुपपन्नाः । न सर्वात्मनः सर्वफलसम्बन्धोपपत्तेरविरोधात्। मृद् इव सर्वघटकरककुण्डाद्यात्मिः । ननु सर्वात्मत्वे दुःखसम्बन्धोऽपि स्यादिति चेन्न । दुःखस्यापत्यात्वेयगमादविरोधः । आत्मन्यविद्याकल्पनानिमित्तानि दुःखानि रज्ज्वामिव सर्पादिकल्पनानिमित्तानि । सा चाविद्या शरीरात्मैकत्वस्वरूपदर्शनेन दुःखनिमित्तोच्छिन्नेति दुःखसम्बन्धाशङ्का न सम्भवति । शुद्धसत्त्वसङ्कल्पनिमित्तानान्तु कामानामीश्वरदेहसम्बन्धः सर्वभूतेषु मानसानां पर एव सर्वसत्त्वोपाधिद्वारेण भोक्तेति सर्वाविद्याकृतसंव्यवहाराणां पर एवात्मास्पदं नान्योऽस्तीति

---

था॰ मिति श्रूयते । नन्विति ॥ भेदो न पुमर्थस्तयोगी केवलव्यतिरेक्यभावात्सुखसाक्षात्कारस्तु पुरुषार्थः ॥ स चाभेदेऽपि भिद्यत इत्याशङ्क्याह । स्वरूपेणेति ॥ आत्मनि विशेषज्ञानराहित्यमिन्द्रस्य नेष्टमित्यत्र हेतुमाह । नाहेति ॥ किन्तर्हि इन्द्रस्येष्टमित्याशङ्क्याह । तद्धीति ॥ येन ज्ञानेनाप्नोति तदिष्टमिन्द्रस्येति पूर्वेण सम्बन्धः । किमिदं विशेषविज्ञानमिन्द्रस्येष्टमित्युच्यते किंवा हितमिति विवक्ष्यते तत्राद्यमङ्गीकरोति । सत्यमिति ॥ द्वितीयं दूषयति । न त्विति ॥ द्वितीयाद्वै भयं भवतीत्यादिश्रुतेरित्यर्थः ॥ तथाभीष्टमेवेन्द्राय प्रजापतिनोपदेष्टव्यमित्याशङ्क्याह । हितश्चेति ॥ किन्तर्हि तस्य हितमिति चेत्तदाह । व्योमवदिति ॥ वक्तव्यमिति सम्बन्धः ॥ हितमेव न त्वनिष्टमिति स्थिते फलितमाह । तन्नेति ॥ सर्वेषां भूतानां लोकानां कामानाञ्चात्मा सच्चिदानन्दमात्रं । तद्रूपत्वं चेन्मुक्तस्येष्यते कथं तर्हि तस्यैश्वर्यश्रुतयो निर्वहन्तीति चोदयति । नन्विति ॥ सगुणविद्यावतो यदैश्वर्यं तन्निर्गुणविद्यास्तुत्यर्थं सङ्कीर्त्यते । ब्रह्मीभूतस्य मुक्तस्य सगुणविद्याया अपि

भा० वेदान्तसिद्धान्तः । य एषोऽक्षिणि पुरुषो दृश्यत इति छायापुरुष एव प्रजापतिनोक्तः सम्प्रसुप्तयोश्चान्य एव । न परोऽपहतपाप्मत्वादिलक्षणो विरोधादिति केचिन्मन्यन्ते । छायाद्यात्मनात्मोपदेशे प्रयोजनमाचष्टे । आदावेवोच्यमाने किल दुर्विज्ञेयत्वात्परस्यात्मनोऽत्यन्तबाह्यविषयात्मकत्वेन मोऽत्यन्तसूक्ष्मवस्तुश्रवणे व्यामोहो मा भूदिति । यथा किल द्वितीयायां सूक्ष्मं चन्द्रं दिदर्शयिषुरेवं कश्चित्प्रत्यक्षमादौ दर्शयति । पश्यामुमेव चन्द्र इति । ततोऽन्यत्र गिरिमूर्द्धानं चन्द्रसमीपस्थमेव चन्द्र इति । ततोऽसौ चन्द्रं पश्यति । एवमेतद्य एषोऽक्षिणीत्याद्युक्तं प्रजापतिना त्रिभिः पर्यायैर्न पर इति । चतुर्थे तु पर्याये देहात्समुत्थायाऽशरीरतामापन्नो ज्योति-

---

व्या० प्रत्यग्भूतत्वात्प्रकाशस्य तत्रोपचरितुं युक्तत्वादिति परिहरति । नेत्यादिना । सर्वात्मत्वे निन्दापि प्राप्नोतीति शङ्कते । नन्विति । दुःखस्य दुःखाभावप्रत्यगात्मा विद्वानपि दुःखी भविष्यतीति समाधत्ते । न दुःखेनेति । तर्हि दुःखिनामात्मा मुक्त इति दुःखी स्यादित्यत आह । व्याप्नोमीति । न तावदात्मनः स्वभावतो दुःखित्वं किन्त्वाविद्यकं । सा च मुक्तस्य दग्धत्वादप्रसक्तिरित्यर्थः । तर्हि विद्यया दग्धायामविद्यायां तदध्यारोपितमैश्वर्यमपि ईश्वरस्य सगुणविद्याफलभूतं तद्दग्धमेवेति कथं सत्यसङ्कल्पत्वमिह तदुपदेशसिद्धिरित्याशङ्क्याह । शुद्धेति । शुद्धसत्त्व रजस्तमोभ्यामस्पृष्टं तस्मान्मायैकदेशाज्जाताः सङ्कल्पा निमित्तानि येषां कामानामैश्वर्यभेदानां ते तथोक्तास्तेषां सर्वेषु भूतेषु विषयेषु मनोमात्रेणेश्वराभिधानरूपेण सिद्धानामीश्वरात्वेन स्वभावेनाभिसम्बन्धो मायावस्थायां सिद्ध इत्यर्थः । ननु जीवानामेवाविद्यातत्कार्यसम्बन्धो नेश्वरस्येति चेन्नेत्याह । पर एवेति । चतुर्ष्वपि

भा॰ स्वरूपं । यस्मिन्नुत्तमपुरुषे स्त्र्यादिभिर्जक्षन् क्रीडन्रममाणो भवति स उत्तमपुरुषः पर उक्त इति चाङ्गः । सत्यं रमणीया तावदियं व्याख्या श्रोतुं। न त्वर्थोऽस्य ग्रन्थस्यैवं सम्भवति । कथमक्षिणि पुरुषो दृश्यत इत्युपन्यस्य मिथ्यार्थां छायात्मनि श्रुतौ तद्विपरीतग्रहणं मत्वा तदपनयायोदशरावोपन्यासः । किं पश्यथ इति च प्रश्नः । साध्वलङ्कारोपदेशस्यानर्थकः स्यात् । यदि छायात्मैव प्रजापतिनाऽक्षिणि दृश्यत इत्युपदिष्टः। किञ्च यदि वा तेन स्वयमुपदिष्टग्रहणस्यापनयनकारणं वक्तव्यं स्यात् । स्वप्नसुषुप्तात्मग्रहणयोरपि तदपनयनकारणं च स्वयं ब्रूयात् । न चोक्तं तेन मन्यामहे । नाक्षिणि छायात्मा प्रजापतिनोपदिष्टः । किन्त्वन्यदक्षिणि द्रष्टा चेद्दृश्यत इति उपदिष्टः

---

आ॰ पर्य्यायेषु स्वमर्थानुवादेन तस्य तदर्थत्वं विधेयमिति स्वाभिप्रायेण प्रजापतिवाक्यं व्याख्यातं ॥ सम्प्रति स्वयूथ्यमतमुत्थापयति । य एष इति ॥ प्रथमपर्य्यायस्य छायात्मवद्द्वितीयपर्य्यायस्योऽपि विज्ञानात्मविषयत्वमित्याह । स्वप्नेति ॥ अन्य एव परस्मादुक्त इति सम्बन्धः ॥ चतुर्थपर्य्यायवत्पर्य्यायत्रयेऽपि परमात्मैव वक्ष्यामीत्युच्यते । तत्राह । न पर इति ॥ अपहतपाप्मत्वादेरवस्थावत्त्वस्य च मिथो विरोधो हेत्वर्थः । नन्वन्तिमे पर्य्याये परस्योपदेशोऽर युज्यते । तज्ज्ञानस्य मुक्तिफलत्वात्किमिति पूर्व्वेषु पर्य्यायेषु छायादयो निर्दिश्यन्ते तत्फलाभावादत आह । छायाद्यात्मनाचेति ॥ तत्र प्रथमं छायात्मनोपदेशस्य प्रयोजनमाह । आदावेवेति ॥ परस्यातिसूक्ष्मत्वेन दुर्व्विज्ञेयत्वात्तस्मिन्नेवादावुच्यमाने सति तस्यापि सूक्ष्मस्य अवबोधेऽपि श्रोतुरनात्मनिष्ठस्य किल व्यामोहः स्यात्स माभूदिति पृथक्छायात्मोपदेशः कृत इति सम्बन्धः ॥ स्वप्नसुषुप्तयोर्विज्ञानात्मोपदेशस्य प्रयोजनं दर्शयमुक्त-

भा॰ स्यात्तत इदं युक्तं। एतत्त्वेव न ह्ययुक्तं स्वप्नेऽपि द्रष्टुरेवोपदेशः। स्वप्ने न द्रष्टोपदिष्ट इति चेन्नापि रोदितीवाप्रियवेत्तेवेत्युपदेशात्। न च द्रष्टुरन्यः कश्चित्स्वप्ने महिमानश्चरति। अत्रायं पुरुषः स्वयं ज्योतिरिति श्रुत्यन्तरे सिद्धत्वात्। यद्यपि स्वप्ने सधीर्भवति तथापि न धीः स्वप्नभोगोपलब्धिं प्रति करणत्वं भजते। किन्तर्हि पटचित्रवज्ज्ञानवासनाश्रया दृश्यैव धीर्भवतीति। न द्रष्टुः स्वयंज्योतिष्ट्वबाधः स्यात्। किञ्चान्यत्। जाग्रत्स्वप्नयोर्भूतानि चात्मानं च जानातीमानि भूतान्ययमहमस्मीति माभैः सत्या प्रतिषेधो युक्तः स्यान्नाह खल्वयमित्यादि। तथा चेतनस्यैवाविद्यानिमित्तयोः सशरीरत्वे सति

---

आ॰ अर्थं दृष्टान्तेन स्पष्टयति। यथेत्यादिना॥ इतिशब्दस्तिङा सम्बध्यते॥ पर्य्यायान्तरस्य तात्पर्य्यमाह। चतुर्थे त्विति॥ सदृश धर्म्मकादिश्चात्मपरभूता ज्योतिःस्वरूपमशरीरत्वं प्राप्तेः यद्यपि चतुर्थे पर्य्याये कथ्यते तथापि कथमसौ परमात्मा स्यादित्याशङ्क्याह। यत्किञ्चिदिति॥ स सम्प्रसादो यो विद्वान् कर्तृत्वेन विवक्षित किमिदं व्याख्यानं शब्दानुसारि किंवाऽर्थानुसारीति विकल्प्याद्यमङ्गीकरोति। सत्यमिति॥ द्वितीयं दूषयति। न त्विति॥ असम्भवमेवाकाङ्क्षाद्वारा स्पष्टयति। कथमित्यादिना॥ यद्याद्ये पर्य्याये छायात्मोपदिश्यते तर्ह्रीन्द्रविरोचनयोः सम्यग्दर्शित्वादिपरीतग्रहापोहार्थं प्रजापतेरायासो वृथा स्यात्। तेन नेदं व्याख्यानमर्थानुसारीत्यर्थः। इतश्च नाद्ये पर्य्याये छायात्मोपदेशोऽस्तीत्याह। किञ्चेति॥ प्रजापतिनोपदिष्टस्यापि छायात्मनो ग्रहणं न स्यादित्याशङ्क्य हेत्वन्तरं स्पष्टयति। यदीति॥ तेन छायात्मापनयनार्थावचनेनेति यावत्। तेन प्रजापतिनेत्येकस्तच्छब्दो योज्यः। इतश्च प्रथमे पर्य्याये दृष्टु

भा० प्रियाप्रिययोरपहतिर्नास्तीत्युक्त्वा तस्यैवाशरीरस्य सतो ऽविद्यायां सत्यां सशरीरत्वे प्राप्तयोः प्रतिषेधो युक्तोऽशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति । एकश्चात्मा स्वप्नबुद्धान्तयोर्महामत्स्यवदसङ्गः सञ्चरतीति श्रुत्यन्तरे सिद्धं । यथोक्तं सम्प्रसादः शरीरात्समुत्थाय यस्मिन् स्त्र्यादिभी रममाणो भवति सोऽन्यः सम्प्रसादादधिकरण-निर्दिष्ट उत्तमः पुरुष इति । तदप्यसत् । चतुर्थेऽपि पर्याये एतन्त्वेव त इति वचनात् । यदि ततोऽन्योऽभिप्रेतः स्यात्पूर्ववदेतन्त्वेव त इति न ब्रूयान्मृषा प्रजापतिः । किञ्चान्यस्तेजोबन्नादीनां स्रष्टुः सतः स्वविकारदेहे शुङ्गे प्रवेशं दर्शयित्वा प्रविष्टाय पुनस्तत्त्वमसीत्युपदेशो न्यथा

---

आ० देवोपदेशो न छायापुरुषस्येत्याह । किञ्चान्यदिति ॥ एतच्छ-ब्देन सन्निहितावक्षिणा छायात्मानमनूद्य स्वप्ने तदुप-देशः प्रजापतेर्मृषावादित्वं प्रसज्येत । तथा च प्रथमेऽपि पर्याये तथैवोपदिष्ट इत्यर्थः ॥ स्वप्नावस्थाविशिष्टस्य स्थाना-न्तरे बाध्यत्वान्न तत्र तदुपदेशोऽस्तीति शङ्कते । स्वप्न इति ॥ अनुभवानुसारेणोत्तरमाह । नेत्यादिना ॥ किञ्च प्रकाश-कारणानामुपरमे यः प्रकाशः स नैसर्गिक इति न्यायेन प्रतीचः स्वयं ज्योतिष्ट्वं बृहदारण्यके स्वप्नावस्थामाश्रित्योक्तं ततश्च तत्र तदुपदेशः सिद्ध इत्याह । न चेति ॥ सूर्यादी-नामुपरमे यः प्रकाशो दृश्यमानः स नैसर्गिक इत्ययुक्तं । स्वप्ने ऽप्यन्तःकरणस्य सत्त्वादित्याशङ्क्याह । यद्यपीति ॥ करणत्वा-भावे हेतुं पृच्छति । किन्तर्हीति ॥ नीलपीतादिजाग्रद्वासना-भिर्विवर्त्तमानाः साक्षिणो वेद्यतामापद्यन्ते । तथाच पटे चित्रवदिति चित्रवासनामयचेतसः साक्षिगम्यत्वान्न स्वप्नोपलब्धौ करणं भवतीति संदृष्टः स्वयं ज्योतिष्ट्वं न्यायसिद्धमित्याह ।

भा० प्रसज्येत। तस्मिंस्त्वं स्यादिभी रत्ना भविष्यसीति युक्त उप-
देशोऽभविष्यद्यदि सम्प्रसादादन्य उत्तमः पुरुषो भवेत्।
तथा भूम्नस्तदमेवेत्यादिश्चात्मैवेदं सर्व्वमिति नोपसमह-
रिष्यद्यदि भूमा जीवादन्योऽभविष्यत्। नान्योऽतोऽस्ति
द्रष्टेत्यादिश्रुत्यन्तराच्च। सर्व्वश्रुतिषु च परस्मिन्नात्मशब्द-
प्रयोगो नाभविष्यत्प्रत्यगात्मा चेत्सर्व्वजन्तूनां पर आत्मा
न भवेत्। तस्मादेक एवात्मा प्रकरणे सिद्धः। न चात्मनः
संसारित्व। अविद्याध्यस्तत्वादात्मनि समारस्य। न हि रज्जु-
शुक्तिकागगनादिषु सर्पेरजतमलादीनि मिथ्याज्ञानाध्य-

---

व्या० यदेति॥ प्रासङ्गिकं हित्वा द्रष्टैवोपदिष्ट॥ स्वप्नावस्थायामि-
त्यत्र हेत्वन्तरमाह। किञ्चेति॥ यथाच जाग्रदवस्थायामिव
स्वप्नेऽपि द्रष्टैवोपदिष्ट इति शेष॥ इतश्च द्रष्टुरेवोपदेश
सम्प्रसादायामित्याह। प्रशान्ताविति॥ न केवलमुत्तमपुरुषो
निषेधो निषेध्यप्राप्तिसापेक्षत्वादवस्थाद्वये द्रष्टृत्वपदेशमाकाङ्क्षति
किन्तु सुषुप्तेयमतो निषिद्धोऽपि निषेध्यमाकाङ्क्षमवस्थाद्वये
द्रष्टृत्वपदेशमाकाङ्क्षतीत्याह। तथा चेति॥ निषेधस्य प्राप्तिसापे
क्षत्वात्प्रकृतस्यैव द्रष्टुरविद्यानिदाने सशरीरत्वे तन्निमित्तयोः
स्यात्स्वयमतयोर्न प्रियाप्रिययोरपहतिरस्तीति न ह वै सशरीर-
स्येत्यादिनोक्तसशरीरत्वे प्राप्तयोः प्रियाप्रिययोस्तस्यैवापक्षायया-
तीतस्य सत्या विद्यायामशरीरमित्यादिना प्रतिषेधो युक्त इति
योजना॥ स्वप्ने द्रष्टृत्वपदेशे हेत्वन्तरमाह। एतस्येति॥ चतुर्थपर्या-
यस्य सौषुप्तादर्थान्तरविषयत्वमुक्तमनुभाष्य दूषयति। यथोक्तमि-
त्यादिना॥ तदेव व्यतिरेकद्वारा स्फोरयति। यदीति। अधिक-
रणाधेयभावेन भेद सत्यो नास्तीत्यत्र हेत्वन्तरमाह। किञ्चान्य-
दिति॥ जीवपरयोर्भेदस्य षष्ठप्रपाठकविरोधवत् सप्तमप्रपाठ
कविरोधोऽपि स्यादित्याह। तथेति॥ बृहदारण्यकश्रुत्यालोच-
नायामपि जीवेश्वरभेदो न सम्भवतीत्याह। नान्य इति॥ इतश्च

भा॰ स्थानि तेषां भवन्तीति । एतेन सशरीरस्य प्रियाप्रिययो-रपहतिर्नास्तीति व्याख्यातं । यच्च स्थितमप्रियवेत्तैवेति ना प्रियावेत्तैवेति सिद्धं । एवञ्च सति सर्व्वपर्य्यायेऽप्येतदमृत-मभयमेतद्ब्रह्मेति प्रजापतेर्वचनं । यदि वा प्रजापति॰ च्छद्मरूपायाः श्रुतेर्वचनं सत्यमेव भवेत् । न च तत्कु-तर्कबुद्ध्या स्वाकर्त्तुं युक्तं । ततो गुरुतरस्य प्रमाणान्तर-स्यानुपपत्तेः । ननु प्रत्यक्षं दुःखाद्यप्रियवेत्तृत्वमव्यभिचा-र्य्यनुभूयत इति चेन्न । जरादिरहितो जीर्णोऽहं जातोऽह-मायुष्मान् गौरः कृशो मृत इत्यादिप्रत्यक्षानुभववत्त-

---

व्या॰ जीवपरयोर्भेदो नास्तीत्याह । सर्व्वश्रुतिष्विति ॥ यौक्तमर्थमुप-संहरति । तस्मादिति ॥ आत्मैक्ये परस्यैव संसारित्वं सर्व्वदेहेषु स्यादिति चेन्नेत्याह ॥ न चेति ॥ आरोपितसंसारित्वं वस्तुतो नास्त्यस्तीत्येतदृष्टान्तेन स्पष्टयति । न हीति ॥ मिथ्या च तद्-ज्ञानञ्चेति मिथ्याज्ञानं । तेनाध्यस्तान्यविद्यमानान्येव विद्यमानव-त्प्रतीतिमात्राणीति यावत् । न ह वै सशरीरस्येत्यादि वदता वास्तवत्वं प्रियाप्रियसम्बन्धस्य विवक्षितमिति शङ्कामुक्तन्यायाति-देशेन निरस्यति । एतेनेति ॥ आत्मनि संसारस्य प्रसक्तिर्नेति यावत् । यावदध्यास्तभावित्वं प्रियाप्रिययोरपहत्यभावो न वास्त-वत्वं शरीरसम्बन्धस्यैव प्रियाप्रियमूलस्य दुर्निरूपत्वादित्यर्थः ॥ स्वप्नदशा खल्वप्रियवेत्तैव भवति न त्वप्रियवेत्तैवेति यत्पूर्व्वंच स्थितं तत्सिद्धं लाभान्तरमाह । एवञ्चेति ॥ प्रजापतेर्व्वचनं सत्यं भवेदिति सम्बन्धः । अपौरुषेय्यां श्रुतौ कुतः प्रजापतेर्वचनं सावकाशमित्याशङ्क्याह । यदि वेति ॥ सुखादयः साश्रयाः गुण-त्वाद्रूपादिवदित्यनुमानात्तदाश्रयः परिशेषादात्मा भविष्यतीति वैशेषिकादितर्कविरोधादसत्यं श्रुतेर्वचनमित्याशङ्क्याह । न चेति ॥ सुखादीनामुपाधिधर्म्मत्वेन सिद्धसाध्यत्वान्नास्ति श्रौतवचसो बाधकमित्यर्थः ॥ प्रत्यक्षमिति शङ्कते । नन्विति ॥ तस्याभासत्वाम

भा० दुपपत्तेः । सर्वमप्येतत्सत्यमिति चेदस्यैवैतदेव दुरवगमं येन देवराजोऽप्युदशरावादिदर्शिता विनाशयुक्तिरपि मुमोहैवाच विनाशमेवापीतो भवतीति । तथा विरोचनो महाप्राज्ञः प्राजापत्योऽपि देहमात्रात्मदर्शनो बभूव । तथेन्द्रस्यात्मविनाशभयसागरे एव वैनाशिका न्यमज्जन् । तथा साङ्ख्या द्रष्टारं देहादिव्यतिरिक्तमवगम्यापि त्यक्तागमप्रमाणत्वात् मृत्युविषय एवान्यत्वदर्शने तस्थुः । तथाऽन्ये काणादादिदर्शनाः कषायरक्तमिव क्षारादिभिर्वस्त्रं नवभिरात्मगुणैर्युक्तमात्मद्रव्यं विशोधयितुं प्रवृत्ताः । तथाऽन्ये कर्मिणो बाह्यविषयापहृतचेतसो वेदप्रमाणा अपि परमार्थसत्यमात्मैकत्वं विनाशमिवेन्द्रवन्मन्यमाना घटीयन्त्रवदारोहावरोहप्रकारैरनिशं बभ्रमन्ति । किमन्ये क्षुद्रजन्तवो विवेकहीनाः स्वभावत एव बहिर्विषयापहृतचेतसः । तस्मादिदं त्यक्तसर्वबाह्यैषणैरनन्यश-

---

आ० बाधकत्वमिति परिहरति । नेत्यादिना ॥ दृष्टान्तोऽपि सम्मति यन्नो न भवतीति शङ्कते । सत्यमिति ॥ तदादे सत्यवचनं स्वकीयमेवमस्यैवेत्यङ्गीकरोति । अस्यैवेति ॥ अङ्गीकारे हेतुमाह । दुरवगममिति ॥ अधिकारिणः प्रमितिजनको वेद इति न्यायात्तादृशानामनधिकारिणां दुर्ज्ञानमात्मतत्त्वं । अतोऽस्यैव जरादिसत्त्वमवधर्मं । न तावता वस्तुविरोध इत्यर्थः । दुरवगमत्वे लिङ्गमाह । येनेति ॥ अन्येनात्मतत्त्वोक्तिः ॥ तस्य दुर्ज्ञानत्वे निदर्शनान्तरमाह । तथेति । वैनाशिकभ्रान्तिरप्यात्मनो दुर्ज्ञानत्वं गमयतीत्याह । तथेन्द्रस्येति ॥ साङ्ख्यभ्रान्तिरपि दुर्ज्ञानत्वमात्मनो ज्ञापयतीत्याह तथा साङ्ख्या इति ॥ तार्किकभ्रान्तिरपि तस्य दुर्बोधत्वे गमकमाह । तथान्य इति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना नवात्मगुणा

उ० अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं

---

भा० रणैः परमहंसपरिव्राजकैरत्याश्रमिभिर्वेदान्तज्ञानपरैरेव वेदनीयं पूज्यतमैः। प्राजापत्यश्चेमं सम्प्रदायमनुस्मरद्भिरुपनिबद्धं प्रकरणचतुष्टयेन। तथाऽनुशासन्यश्चापि त एव नान्य इति। तत्राशरीरस्य सम्प्रसादस्याविद्यया शरीरेणाविशेषतां सशरीरतामेव सम्प्राप्तस्य शरीरात्समुत्थाय स्वेन रूपेण यथाऽभिनिष्पत्तिस्तथा वक्तव्येति दृष्टान्त उच्यते। अशरीरो वायुरविद्यमानं शिरःपाण्यादिमच्छरीरमस्येत्यशरीरः। किञ्चाभ्रं विद्युत्स्तनयित्नुरित्येतानि चाशरीराणि। ततश्चैवं सति वर्षादिप्रयोजनावसाने यथा। अमुष्मादिति भूमिष्ठा श्रुतिर्द्युलोकसम्बन्धिनमाकाशदेशं व्यपदिशति। एतानि यथोक्तान्याकाशसमान-

---

आ० मीमांसकभ्रान्तिः॥ तस्य दुर्बोधत्वे गमकमित्याह। तथान्य इति॥ यदा परीक्षकाणामपीदृशी भ्रान्तिरात्मनो दुरवगमत्वं गमयति तदा विचारविधुराणां लौकिकानां भ्रान्तिस्तत्र प्रमाणयितव्येत्याह। किमन्य इति॥ अन्ये च सम्भ्रमन्तीति किं वक्तव्यमिति सम्बन्धः॥ यदि लौकिकानां परीक्षकाणां चेदमात्मतत्त्वं दुर्ज्ञानं प्रतिभायते केषां तर्हि इदं सुज्ञानमित्याशङ्क्याह। तस्मादिति॥ एषणाखिवात्मतत्त्वेऽपि तेषामौदासीन्यं वारयति। अनन्यशरणैरिति॥ तेषां कुटीचरादिभावं व्यावर्तयति। परमहंसेति॥ कर्मनिष्ठानामाश्रमानतीत्य नैष्कर्म्यप्राधान्येन वर्तमानत्वं दर्शयति। अत्याश्रमिभिरिति॥ अनन्यशरणैरित्युक्तं व्यनक्ति। वेदान्तेति॥ पूज्यतमैरिति नित्यानुवादस्तेषामात्मवेदनोपायं प्राधानमुपदिशति। प्राजापत्येति॥ स्थान-

उ॰ ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥२॥
एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं

---

भा॰ रूपतामापन्नानि स्वेन वाय्वादिरूपेणागृह्यमाणानि आकाशाख्यतां गतानि । यथा सम्प्रसादोऽविद्यावस्थायां शरीरात्मभावमेवापन्नस्तानि च तथा भूतानि अमुष्माद्युलोकसम्बन्धिन आकाशदेशात्समुत्तिष्ठन्ति वर्षणादिप्रयोजनाभिनिर्वृत्तये । कथं शिशिरापाये सावित्रं परं ज्योतिः प्रकृष्टं ग्रैष्मकमुपसम्पद्य सावित्रमभितापं प्राप्येत्यर्थः । आदित्याभितापेन पृथग्भावमापादिताः सन्तः स्वेन स्वेन रूपेण पुरोवातादिना वायुरूपेण स्तिमितभावं हित्वा अभ्रमपि पर्वतहस्त्यादिरूपेण । विद्युदपि स्वेन ज्योतिर्लतादिचपलरूपेण । स्तनयित्नुरपि स्वेन गर्जिताशनिरूपेणेत्येवं प्रावृडागमे स्वेन स्वेन रूपेणाभिनिष्पद्यन्ते । यथाऽयं

---

आ॰ अयं तुरीयखण्ड इत्येतद्विषयं प्रकरणचतुष्टयं । यथोक्ताधिकारिणमेवात्मवेदनमित्यत्र निष्कान्तरमाह । तथेति । अशरीरमित्यादिवाक्यव्याख्यानोपसंहारार्थमितिपदं अशरीरस्य सतो मुक्तिरशरीरत्वेऽपि स्थिते किमर्थमशरीरो वायुरित्यादिवाक्यमित्याशङ्क्याह । तस्येत्यादिना । कथं वायोरशरीरत्वं तदाह । अविद्यमानमिति । एवं सति वाय्वादीनामशरीरत्वे सतीति यावत् । आकाशस्य सर्वत्रैकरूपत्वादमुष्मादिति कुतो व्यपदेशसिद्धिरित्याशङ्क्याह । अमुष्मादितीति । यथोक्तान्यशरीराणि वाय्वादीनि तेषामाकाशत्वापत्तौ दृष्टान्तमाह । यथेति । तथा वाय्वादीनि स्वेन रूपेणागृह्यमाणत्वदशायामाकाशात्मतां गतानीति सम्बन्धः । तानि च वाय्वादीनि तथाभूतान्याकाशात्मतां प्राप्तानीत्येवं । वर्षादिफलनिष्पत्त्यर्थं वाय्वादीनामाकाशदेशात्

उ॰ ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पूरुषः स तत्र पर्य्येति जक्षत्क्रीडन्रममाणः

---

भा॰ दृष्टान्तो वाय्वादीनामाकाशादिसाम्यगमनवदविद्यया संसारावस्थायां सशरीरसाम्यमापन्नोऽहममुष्य पुत्रो जातो जीर्णो मरिष्य इत्येवम्प्रकारं। प्रजापतिनेव मघवान् यथोक्तेन क्रमेण नासि त्वं देहेन्द्रियादिधर्म्मा तत्त्वमसीति प्रतिबोधितः सन् स एष सम्प्रसादो जीवोऽस्माच्छरीरात् आकाशादिव वाय्वादयः समुत्थाय देहादिविलक्षणमात्मनो रूपमवगम्य देहात्मभावनां हित्वेत्येतत्स्वेन रूपेण सदात्मनैवाभिनिष्पद्यत इति व्याख्यातं पुरस्तात्। स येन स्वेन रूपेण सम्प्रसादोऽभिनिष्पद्यते प्राक् प्रतिबोधात् तद्भ्रान्तिनिमित्तात्सर्पो भवति यथा रज्जुः। पश्चात्कृतप्रकाशाद्रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते। अत एवञ्च स उ-

---

आ॰ समुत्थानमुक्तमाकाशादाविव स्फुटयति। कथमित्यादिना॥ स्वेन स्वेन रूपेणाभिनिष्पद्यन्त इति सम्बन्धः। तत्र वायोरभ्रस्य विद्युत्स्तनयित्न्वोश्च स्वेन रूपेणाभिनिष्पत्तिप्रकारं विवृणोति। पुरोवातादीति॥ किमिवभावं हित्वा वायुरिति शेषः॥ दृष्टान्तमनूद्य दार्ष्टान्तिकमाह। यथेति॥ वाय्वादीनामित्यत्रानुपस्कारतयेत्यध्याहर्त्तव्यं। अभ्रादिशब्देनाभ्रविद्युत्स्तनयित्नवो गृह्यन्ते। आकाशादित्यादिपदमभ्रादिकारकसङ्ग्रहार्थं॥ शरीरसाम्यमेव विशिनष्टि। अहमिति॥ प्रतिबोधने दृष्टान्तमाह। प्रजापतिनेति॥ यथोक्तेन क्रमेण पर्य्यायचतुष्टयोपदिष्टप्रकारेणेति यावत्। मघवान्प्रतिबोधित इति सम्बन्धः। दार्ष्टान्तिके प्रतिबोधनप्रकारं दर्शयति। नासीति॥ शरीरादित्युपसमुत्थाने दृष्टान्तमाह। आकाशादिवेति॥ समुत्थानं विभ-

उ० स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मर-

भा० त्तमपूरुषः। उत्तमश्चासौ पूरुषश्चेत्युत्तमपूरुषः स एवोत्तमपूरुषः। अक्षिस्वप्नपुरुषौ व्यक्ताव्यक्तश्च सुषुप्तः समस्तः सम्प्रसन्नोऽशरीरश्च स्वेन रूपेणेति। एषामेव स्वेन रूपेणावस्थितः क्षराक्षरौ ,व्याकृताऽव्याकृतावपेक्ष्योत्तमपूरुषकृतनिर्वचनो ह्ययं गीतासु स सम्प्रसादः स्वेन रूपेण तत्र स्वात्मनि स्वस्थतया सर्व्वात्मभूतः पर्य्येति क्वचिदिन्द्राद्यात्मना जक्षद्धसन् भक्षयन् वा भक्ष्याणुच्चावचानीप्सितान् क्वचिन्मनोमात्रैः सङ्कल्पादेव समुत्थितैर्ब्रह्मलौकिकैर्वा क्रीडन् स्त्र्यादिभी रममाणश्च मनसैव नोपजनं स्मरन् स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्युपजनमात्मभावेन वात्मसामीप्येन जायत इत्युपजनमिदं शरीरं तन्न स्मरन्। तत्स्मरणे हि दुःखमेव स्यात्। दुःखा-

टा० त्मते। देहादीति॥ पूर्ववत्ति परिहरति। इति व्याख्यातमिति॥ उक्तदृष्टान्तं सम्बन्ध्य व्याचष्टे। स येनेति। स उत्तमः पुरुष इति सम्बन्धः। सम्प्रसादस्य स्वेन रूपेणाभिनिष्पत्तिं दृष्टान्तेन स्पष्टयति। प्राणित्यादिना॥ उक्तदृष्टान्तानुसारेणाविद्यादशायां शरीरात्मत्वमापन्नो जीवो विद्यया प्रकाशितस्वस्वरूपतत्त्वः स्वेन रूपेणाभिनिष्पन्नो भवतीति दार्ष्टान्तिकमाह। स उत्तमेति॥ पुरुषस्योत्तमत्वविशेषणं पुरुषान्तरव्यवच्छेदार्थमित्यभिप्रेत्य पुरुषभेदं दर्शयति। चक्षीति॥ इति चत्वारः पुरुषा इति शेषः। तत्र पूर्व्वेषां त्रयाणां व्यवच्छेदं तुरीयस्य तूत्तमपुरुषत्वमित्याह। क्षराक्षराविति॥ तयोरुत्तमपुरुषे भगवत्सम्मतिं सङ्गिरते। द्वाविति॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।

भा० त्मकत्वात्तस्य । नन्वनुभूतं चेन्न स्मरेदसर्व्वज्ञत्वमुक्तं स्यात् । नैष दोषो येन मिथ्याज्ञानादिना जनितं तच्च मिथ्याज्ञानादि विद्ययोच्छेदितमतस्तन्नानुभूतमेवेति न तदस्मरणे सर्व्वज्ञत्वहानिः । न ह्युन्मत्तेन ग्रहगृहीतेन वा यदनुभूतं तदुन्मादाद्यपगमेऽपि स्मर्त्तव्यं स्यात्तथेहापि संसारिभिरविद्यादोषवद्भिर्यदनुभूयते तत्सर्व्वात्मानमशरीरं न स्पृशति । अविद्यादिनिमित्ताभावात् । ये त्वच्छिन्नदोषैर्म्मर्दितकषायैर्म्मानसाः सत्याः कामा अनृतापिधाना अनुभूयन्ते विद्याभिव्यक्तत्वात् त एवमुक्तेन सर्व्वात्मभूतेन सम्बध्यन्त इत्यात्मज्ञानस्तुतये निर्दिश्यन्तेऽतः साध्वेतद्विशिनष्टि । य एते ब्रह्मलोक इति । यत्र क्वचन भवन्तोऽपि ब्रह्मण्येव हि ते लोके भवन्तीति सर्व्वात्मत्वाद्ब्रह्मण उच्यन्ते । ननु कथमेकः सन्नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानातीति

---

आ० यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति हि स भगवानूचिवान् । स तत्रेत्यादि व्याचष्टे । स सम्प्रसाद इति । क्वचिदिति स्वर्गलोकोक्तिः । क्वचिन्मनोमात्रैर्वियत्र क्वचिदिति ब्रह्मलोको गृह्यते । नेमञ्जनमिति प्रतीकं गृहीत्वा व्याकरोति । स्त्रीपुरुषयोरिति । तत्र स्मरन्पश्यतीति सम्बन्धः । यथोक्तदेहस्मृतौ कानुपपत्तिरित्याशङ्क्याह । तत्स्मरणे होति । विदुषो मुक्तस्यानुभूतदेहास्मरणे दूषणमापद्यते । नन्विति । असर्व्वज्ञत्वदोषं निराकरोति । नैष दोष इति । अनुभूतार्थस्मृतौ हि सर्व्वज्ञ इति । न च शरी-

उ॰ अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः

भा॰ वा तस्मिन्नाचरणे युक्तस्तदाकर्षणाय। एवमस्मिञ्छरीरे
रथस्थानीये प्राणः पञ्चवृत्तिः इन्द्रियमनोबुद्धिसंयुक्तः
प्रज्ञात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्च्छितात्मा युक्तः स्वक-
र्मफलोपभोगनिमित्तं नियुक्तः। कस्मिन्न्वहमुत्क्रान्तो
भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीती-
श्वरेण राज्ञा इव सर्वाधिकारी. दर्शनश्रवणचेष्टाव्या-
पारेऽधिकृतः। तस्यैव तु मात्रैकदेशश्चक्षुरिन्द्रियं रूपोप-
लब्धिद्वारभूतं। अथ यत्र कृष्णतारोपलक्षितमाकाशं
देहच्छिद्रमनुविषण्णमनुषक्तमनुगतं तत्र स प्रकृतोऽशरीर
आत्मा चक्षुषि भवतीति चाक्षुषश्चक्षुषि भव इति चाक्षु-
षस्तस्य दर्शनाय रूपोपलब्धये चक्षुः करणं यस्य तत्।
देहादिभिः संहतत्वात्परस्य द्रष्टुरर्थे सोऽत्र चक्षुषि दर्श-

---

आ॰ कामानां कुतो प्रकाशोकभावित्वमित्याशङ्क्याह। यत्रेति।
मनसैतान् कामानित्यादिवाक्यं श्रुत्यर्थमपि प्रधानवाक्यविरुद्ध-
त्वादप्रमाण्यमिति शङ्कते। नन्विति। वाक्ययोर्मिथो विरोधे दृष्टा-
न्तमाह। यथेति। यद्वैतन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो
विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति। ततोऽन्यद्विभक्तं यत्प-
श्येदिति बृहदारण्यकश्रुतिमाश्रित्य विरोधं धुनोति। नैष दोष
इति। तत्र यथोक्तं वाक्यं सुषुप्तमधिकृत्य प्रवृत्तं कथं मुक्तवि-
षये तथोदाहृतमत आह। सुषुप्तीति। सुषुप्तस्य मोक्षदृष्टान्त-
त्वात्तद्गतस्य च दार्ष्टान्तिकेऽनुगमाद्युक्तं सुषुप्ते सत्त्वमन्ते॰
मुक्ते सिद्धतीत्यर्थः। किंच मुक्तमेवाधिकृत्य यत्र त्वस्य सर्वमात्मै-
वाभूदित्यादि तथैवोक्तमित्याह। केनेति। यथार्थवादस्या-
नित्यवाक्यस्य च मिथो विरोधं प्रवृत्ते। अशरीरेति। इष्टत

उ० राणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदꣳ शृणवानीति स आत्मा श्रवणाय श्रोत्रं ॥ ४ ॥ अथ यो वेदेदं मन्वानीति स आत्मा

---

भा० अथ यो वेदेदं मन्वानीति मननव्यापारमिन्द्रियाप्रयुक्तं केवलं मन्वानीति वेद स आत्मा। यो वेद स आत्मेत्येवं सर्वत्र प्रयोगाद्वेदनमस्य स्वरूपमित्यवगम्यते। यथा यः पुरस्तात्प्रकाशयति स आदित्यो यो दक्षिणतो यः पश्चाद्य उत्तरतो य ऊर्ध्वं प्रकाशयति स आदित्य इत्युक्ते प्रकाशस्वरूपः स इति गम्यते। दर्शनादिक्रियानिर्वर्त्यर्थानि तु चक्षुरादिकरणानि। इदं स्वास्यात्मनः सामर्थ्यादवगम्यते। आत्मनः सत्तामात्र एव ज्ञानकर्तृत्वं न तु व्यापृततया।

---

आ० यद्वि मनःप्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुरितिश्रुत्यन्तरमालम्ब्याह । इन्द्रियेति ॥ आत्मानं रथिनं विद्धीतिश्रुतेः प्राणस्य रथित्वमित्याशङ्क्य तस्य तदुपाधिर्यस्तदभेदाद्भोक्तारमेवमित्याह । प्रज्ञात्मेति ॥ तस्याध्यात्मसमानदयविशिष्टत्वेन स्फुरितं स्वरूपं दर्शयति । विज्ञानेति ॥ ईश्वरस्य यथोक्तमायोपाधिकस्य भोक्तृत्वादिसंसारित्वमित्यत्र श्रुत्यन्तरं प्रमाणयति । कस्मिन्निति ॥ प्रतिष्ठास्यामीति ईक्षित्वा स प्राणमसृजतेत्यादिश्रुतिरिति शेषः ॥ तत्राह यथा राजा सर्वाधिकारित्वेन सेनाध्यक्षः सन्धिविग्रहादौ नियुज्यते तथेश्वरेण सर्वचेष्टास्वराधिष्ठितः स्वकार्यदर्शनादिव्यापारनिमित्तं नियुक्तो भवतीत्याह । राजेति ॥ प्राणः स्वविलक्षणेन चेतनेन नियुज्यते प्रयोज्यत्वाद्रथादिवदित्यनुमानाद्देहसंहतत्वाद्व्यासादिसिद्धोऽसंहतचेतनः सिद्ध्यतीति समुदायार्थः । चक्षुरादिचेष्टा चेतननिमित्ता चेष्टात्वाद्रथादिचेष्टावदिति ॥ अनुमानान्तरं सूचयति । सर्वैवेति ॥ महतगाम्यविषयस्वाच्छन्दः । मात्रैर्मेत्यस्य व्याख्यानमेकदेश इति

उ॰ मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ॥५॥ य

भा॰ यथा सवितुः सत्तामात्र एव प्रकाशनकर्तृत्वं न तु व्यापृततयेति तद्वत् । मनोऽस्यात्मनो दैवममाकृतमितरैरिन्द्रियैरसाधारणं । चक्षुश्चष्टे पश्यत्यनेनेति चक्षुः । वर्त्तमानकालविषयाणि चेन्द्रियाण्यतोऽदैवानि तानि । मनस्तु त्रिकालविषयोपलब्धिकरणं स्मृतिसंशयाद्य सूक्ष्मव्यवहितादि सर्व्वोपलब्धिकरणञ्चेति दैवञ्चक्षुरुच्यते । स वै मुक्तः स्वरूपापन्नोऽविद्याकृतदेहेन्द्रियमनोविमुक्तः सर्व्वात्मभावमापन्नः सन्नेव व्योमवद्विशुद्धः सर्व्वेश्वरो मनउपाधिः सन् एतेनैश्वरेण मनसैतान् कामान् सवितृप्रकाशवन्नित्यप्रततेन

उ॰ एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च

---

भा॰ दर्शनेन पश्यन् रमते। कान् कामानिति विशिनष्टि। य एते ब्रह्मणि लोके हिरण्यनिधिवद्बाह्यविषयासङ्गानृतेनापिहिताः सङ्कल्पमात्रलभ्यास्तानित्यर्थः। यस्मादेष इन्द्राय प्रजापतिनोक्त आत्मा। ततः श्रुत्वा तमात्मानमद्यत्वेऽपि देवा उपासते। तदुपासनाच्च तेषां सर्वे च लोका आत्ताः प्राप्ताः सर्वे च कामाः। यदर्थं इन्द्र एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास तत्फलं प्राप्तं देवैरित्यभिप्रायः॥ तद्युक्तं देवानां महाभाग्यत्वान्न त्विदानीं मनुष्याणामत्यल्प-

---

आ॰ वाक्योपदिश्यते तत्राह। स्फुटेति। चक्षुषः स्फुटोपलब्धौ हेतुत्वे श्रुतिं सम्पादयति। अहमिति। यथादर्शमिति चक्षुषः प्रत्ययस्तदस्तु सत्यं स्फुटोपलम्भादिति द्वयोर्विवदमानयोर्दृष्ट-मित्यर्थः। य एषोऽक्षिण्यत्र सर्वेन्द्रियद्वारोपलब्ध्या विवक्षित इत्युक्तं व्यक्तीकरोति। अथापीति। चक्षुषि स्फुटोपलम्भेऽपीति यावत्। योऽस्मिन्देहे येन केनापीन्द्रियेण। यं कंचिद्विषयं वेद स आत्मेति सम्बन्धः। उक्तमेवार्थमाकाङ्क्षाद्वारा स्फोरयति। कथमित्यादिना। जिघ्राणीति यो वेदेत्युक्तमेव सङ्क्षिपति। घ्रायेति। इन्द्रियैर्घ्राणादिभिरसंस्पृष्टं तत्तद्द्वारेणानिष्पन्न-मिति यावत्। केवलं मनोमात्रजनितमित्येतन्मन्वानि सम्पादया-नीत्यर्थः। यो वेदेत्यत्र प्रत्ययार्थभूतं कर्तृत्वं सापेक्षत्वान्मिथ्या-भवत्वर्थं रूपन्तु संविन्मात्रमनपेक्षतया सत्यमात्मस्वरूपमि-त्याह। यो वेदेति। आत्मा संवेदनस्वभावस्तेनतत्संसर्गादेव विषयसिद्धिसम्भवाच्चक्षुरादिवैयर्थ्यं स्यादित्याशङ्क्याह। दर्शना-दीति। अन्तःकरणवृत्तिर्दर्शनादिक्रिया। सा आत्मनः संवि-

उ० श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये अश्व इव रोमाणि विधूय पापं चन्द्र इव राहो मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति॥१॥१३॥

---

भा० श्यामाच्छबलं प्रपद्य इत्यादिमन्त्राम्नायः पावनो जप्यार्थश्च ध्यानार्थो वा। श्यामो गम्भीरो वर्णः श्याम इव श्यामो हार्दं ब्रह्म। अत्यन्तदुरवगाह्यत्वात्तद्धार्दं ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छ्यामाच्छबलमिव शबलोऽरण्याद्यनेककामामिश्रत्वाद्ब्रह्मलोकस्य शाबल्यं तं ब्रह्मलोकं शबलं प्रपद्ये मनसा। शरीरपाताद्वोर्ध्वं गच्छेय। यस्मादहं शबलाद्ब्रह्मलोकान्नामरूपव्याकरणाच्छ्यामं प्रपद्ये हार्दं ब्रह्मभावं प्रपन्नोऽस्मीत्यभिप्रायः। अतस्तमेव प्रकृतिस्वरूपमात्मानं शबलं प्रपद्य इत्यर्थः। कथं शबलं ब्रह्मलोकं प्रपद्य इत्युच्यते। अश्व इव स्वानि लोमानि विधूय कम्पनेन श्रमं पांस्वादि च रोमतोऽपनीय यथा निर्मलो भवत्येवं हार्दब्रह्मज्ञानेन विधूय पापं धर्माधर्माख्यं चन्द्र इव च मुखाद्राहुग्रस्तस्तस्माद्राहोर्मुखात्प्रमुच्य भास्वरो भवति यथैवं धूत्वा प्रहाय

---

आ० उक्ताया दहरविद्यायाः शेषभूतं जपविधानार्थमारभते। श्यामादिति। अत्यन्तदुरवगाह्यत्वाज्ज्ञानहीनानामिति शेषः। कथं जीवतो ब्रह्मलोकप्राप्तिरित्याशङ्क्याह। मनसेति। न तर्हि मुख्या तत्प्राप्तिरित्याशङ्क्याह। शरीरेति। विपरीतपाठं हेतुत्वेनेति व्याचष्टे। यस्मादिति। हेतुं प्रतिज्ञया योज्यते। अत इति। दृष्टान्ताकाङ्क्षापूर्वकमवतार्य व्याचष्टे। कथमित्यादिना।

उ॰ आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳस आत्मा प्रजापतेः सभां

भा॰ शरीरं सर्व्वानर्थाश्रयमिहैव ध्यानेन धुत्वा कृतात्मा कृतकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमभिसम्भवामीति। द्विर्वचनं मन्त्रपरिसमाप्त्यर्थं॥ १३ ॥

आकाशो वै इत्यादि ब्रह्मणो लक्षणनिर्द्देशार्थं । आकाशो वै नाम श्रुतिषु प्रसिद्ध आत्मा । आकाश इवाशरीरत्वात्सूक्ष्मत्वाच्च स आकाशो नाम । नामरूपयोः स्वात्मस्थयोर्जगद्बीजभूतयोः सलिलस्येव फेनस्थानीययोर्निर्व्वहिता निर्व्वोढा व्याकर्त्ता। ते नामरूपे यदन्तरा यस्य ब्रह्मणोऽन्तरा मध्ये वर्त्तेते तयोर्वा नामरूपयोरन्तरा मध्ये यन्नामरूपाभ्यामस्पृष्टं। यदि तद्ब्रह्म नामरूपविलक्षणं नामरूपाभ्यामस्पृष्टं तथापि तयोर्निर्व्वोढैवंलक्षणं ब्रह्मेत्यर्थः । इदमेव मैत्रेयीब्राह्मणोक्तं विज्ञानघनानुगमात्सर्व्वंच चित्स्वरूपमेवेति गम्यते एकवाक्यतया

आ॰ शरीरस्य त्याज्यत्वे हेतुमाह । सर्व्वानर्थेति । इतिशब्दो ध्यानसमाप्त्यर्थः । १३ ।

स्वरोऽस्मिन्नाकाश इति लक्षणनिर्देशस्य प्रकृतोपयोगं दर्शयति । आकाशो वै इति । सर्व्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायानित्याद्या श्रुतयः । आकाशशब्देनात्मनः श्रुतिषु प्रसिद्धत्वे हेतुमाह । आकाश इवेति । ते यदन्तरेत्यत्र ते इति पदं प्रथमाद्विवचनान्तं गृहीत्वा व्याख्याय द्वितीयाद्विवचनान्तं पदं समाश्रित्य व्याचष्टे । तयोर्व्वेति । यदन्तरेति समस्तं पदं पूर्व्वं

उ० वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं

---

भा० ऽऽत्मा। कथं तदवगम्यत इत्याह स आत्मा। आत्मा हि नाम सर्वजन्तूनां प्रत्यक्चेतनः स्वसंवेद्यः प्रसिद्धस्तेनैव स्वरूपेणोन्नीयाशरीरो व्योमवत्सर्वगत आत्मा ब्रह्मेत्यवगन्तव्यम्। तथात्मा ब्रह्मामृतममरणधर्मा। अत ऊर्ध्वं मन्त्रः। प्रजापतिश्चतुर्मुखस्तस्य सभां वेश्म प्रभुविमितं वेश्म प्रपद्ये गच्छेयम्। किञ्च यशोऽहं यशो नामात्माहं भवामि ब्राह्मणानाम्। ब्राह्मणा एव हि विशेषतस्तमुपासते। अतस्तेषां यशो भवामि। तथा राज्ञां विशां च। तेऽप्यधिकृता एवेति तेषामप्यात्मा भवामि। तद्यशोऽहमनुप्रापत्सि प्राप्स्यामि प्राप्तुमिच्छामि। स हाहं यशसामात्मना देहेन्द्रियमनोबुद्धिलक्षणानां यशसामात्मा। किमर्थमहमेवं प्रपद्य इत्युच्यते। श्वेतं वर्णतः पक्वबदरसमं रोहितं तथाऽदत्कं दन्त-

---

आ० व्याख्यातमधुना तु श्रुत्यैव व्याकृतं तदेव व्याकरणं संक्षिपति। नामरूपाभ्यामिति। अस्पृष्टत्वे कथं तन्निर्वाहकमित्याशङ्क्याह। नामरूपाभ्यामस्पृष्टमिति। मायावशादिति शेषः। आत्मत्वेऽपि कथं करतलामलकवद्ब्रह्मणोऽपरोक्षत्वमत आह। आत्मा हीति। तेन स्वसंवेदनत्वेनेति यावत्। कुतो देहद्वयोपहितस्यात्मनः स्वसंवेद्यत्वं तत्राह। अशरीर इति। परिच्छिन्नस्याशरीरत्वमयुक्तमित्याशङ्क्याह। व्योमवदिति। प्रत्यैव प्रत्यक्षभूतमिति कथमवगतमित्याशङ्क्याह। आत्मेति। अनात्मत्वे घटवदनात्मत्वप्रसङ्गात्प्रत्यग्भूतमस्य ब्रह्मत्वमित्यर्थः। उपास्यस्वरूपं दर्शयित्वा तदुपासकस्य प्रार्थनामन्त्रमुत्थाप्य व्याकरोति। अत ऊर्ध्वमिति। प्रथमतो आद्याय

उ॰ यशसां यशः श्वेतमदत्कमदत्कꣳ श्वेतं लिन्दु-
माभिगां लिन्दुमाभिगां ॥ १ ॥ १४ ॥

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्म-
नवे मनुः प्रजाभ्य आचार्य्यकुलाद्वेदमधीत्य

---

भा॰ एवंहितमप्यदत्कं भचयित्रु तेजोबलवीर्यविज्ञानधर्माणामप-
हन्तृ विनाशयितृ चैतत्। तत्स्त्रीविनां स्त्रीव्यञ्जनं यदेव
लक्षणं श्वेतं लिन्दु पिच्छलं तं माभिगां माभिगच्छेयं।
द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थं ॥ १४ ॥

तद्धैतदात्मज्ञानं सोपकरणमोमित्येतदक्षरमित्याद्यैः
सहोपासनैस्तद्वाचकेन ग्रन्थेनाष्टाध्यायलक्षणेन सह ब्रह्मा
हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण प्रजापतये कश्यपायो-
वाच। असावपि मनवे स्वपुत्राय। मनुः प्रजाभ्यः। इत्येवं श्रु-
त्यर्थसम्प्रदायपरम्परयाऽऽगतमुपनिषद्विज्ञानमद्यापि विद्-
त्स्ववगम्यते। यथेह षष्ठाद्यध्यायत्रये प्रकाशितात्मविद्या
सफलाऽवगम्यते तथा कर्माणि न कथनार्थं इति प्राप्ते तदा-
नर्थक्यप्राप्तिपरिजिहीर्षयेदं कर्मणो विद्वद्भिरनुष्ठीयमानस्य

---

व्या॰ यदर्थे हेतुमाह। ब्राह्मण एवेति। विशेषं निर्दिशति। स्त्रीव्यञ्जन-
मिति। योनिप्रभृति प्रजननेन्द्रियमित्यर्थः। कथं तद्दूषयितृ
भवेत्तदाह। तत्स्त्रीविनामिति। तदाभिगमनं नाम गर्भवाप-
स्तस्यातिशयेनानर्थहेतुत्वं ज्ञापयितुं द्विर्वचनमित्यर्थः॥१४॥

उक्तविज्ञानस्योपेक्षितत्वप्रसङ्गे श्रुदस्यमनादिपारम्पर्यागतत्वं
दर्शयति। तद्धैतदिति। सोपकरणमुपकरणैः शमादिभिः
सहितमिति यावत्। तद्द्वारेण हिरण्यगर्भद्वारेणेत्यर्थः। विद्या-

उ॰ यथा विधानं गुरोः कर्म्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्म्मिका-

---

भा॰ विशिष्टफलवत्त्वेनार्थवत्त्वमुच्यते । आचार्य्यकुलाद्वेदमधीत्य सहार्थतोऽध्ययनं कृत्वा यथा विधानं यथा स्मृतिभिर्नियमैर्युक्तः सन्नित्यर्थः । सर्व्वस्यापि विधेः स्मृत्युक्तस्योपकुर्व्वाणकं प्रति कर्त्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह । गुरोः कर्म्म यत्कर्त्तव्यं तत्कृत्वा कर्म्मशून्यो योऽतिशिष्टः कालस्तेन कालेन वेदमधीत्येत्यर्थः । एवं हि नियमवताधीतो वेदः कर्म्मज्ञानफलप्राप्तये भवति नान्यथेत्यभिप्रायः । अभिसमावृत्य धर्म्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्ये विहिते कर्म्मणि तिष्ठन्नित्यर्थः । तत्रापि गार्हस्थ्यविहितानां कर्म्मणां स्वाध्यायस्य प्राधान्यप्रदर्शनार्थमुच्यते । शुचौ विविक्ते अमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानो नित्यनैमित्तिकं कर्म्माधिकञ्च यथा शक्तितः ऋगाद्यभ्यासञ्च कुर्व्वन् धार्म्मिकान् पुत्रान्

---

आ॰ प्रकरणं समाप्याविद्वदनुष्ठितस्य कर्म्मणः साफल्यमविद्वत्सन्तोषार्थं कथयति । यथेत्यादिना । स्मृतीति प्रकृतोपनिषदुक्तिः । प्राङ्मुखत्वपवित्रपाणित्वादयो नियमाः । भिक्षाशनस्नानाचमनादिर्विधिः । किमित्येष नियमोऽध्ययने कथ्यते तत्राह । एवं हीति । तत्रापीति सप्तम्या यथोक्तोऽधिकारी गृहीतः । एतत्सर्व्वं स्वयं कुर्व्वन् ब्रह्मलोकमभिसम्पद्यत इति सम्बन्धः । एवं वर्णयितव्यस्य व्याख्यानमेव यथोक्तेन प्रकारेण कुर्व्वन्निति ।

उ॰ न्विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिꣳसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च

---

भा॰ शिष्यांश्च धर्मयुक्तान् विदधद्धार्म्मिकत्वेन स्थापयन्नात्मनि स्वहृदये हार्द्दे ब्रह्मणि सर्व्वेन्द्रियाणि सम्प्रतिष्ठाप्योपसंहृत्य सर्व्वेन्द्रियग्रहणात्कर्म्माणि च संन्यस्याहिंसन् हिंसां परपीडामकुर्व्वन् सर्व्वभूतानि स्थावरजङ्गमानि भूतान्यपीडयन्नित्यर्थः ॥ भिक्षानिमित्तमटनादिनापि परपीडा स्यादित्यत आह । अन्यत्र तीर्थेभ्यः । तीर्थं नाम शास्त्रानुज्ञाविषयस्ततोऽन्यत्रेत्यर्थः । सर्व्वाश्रमिणां चैतत्समानं । तीर्थेभ्योऽन्यत्राहिंसैवेत्याचार्य्या वर्णयन्ति । कुटुम्ब एवैतत्सर्व्वं कुर्व्वन् स खल्वधिकृतो यावदायुषं यावज्जीवमेवं यथोक्तेन प्रकारेणैवं वर्त्तयन् ब्रह्मलोकमभिसम्पद्यते देहान्ते । न च पुनरावर्त्तते । शरीरग्रहणाय पुनरावृत्तेः प्राप्तायाः प्रतिषेधात् । अर्च्चिरादिना मार्गेण कार्य्यब्रह्मलोकमभिसम्पद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति प्राक्ततो नावर्त्तत

---

टी॰ आवृत्तिप्रतिषेधाम्नायो वारयति । पुनरावृत्तेरिति । चन्द्रलोकादिव ब्रह्मलोकादपि प्राप्ता पुनरावृत्तिस्तस्या न चेत्यादिप्रतिषेधाम्नायप्रवृत्तेरित्यर्थः । अपुनरावृत्तिवाक्यमन्यथा व्याकरोति । अर्चिरादिनेति । प्राक्तत इति ब्रह्मप्रलयात्पूर्वं ब्रह्मलोकात्ततो [illegible]दित्यर्थः । विमदादिजन्मनाशं जातमथ[illegible]मतो यतः । सदस्ति नामरूपादिविदन्ति [illegible] निर्मंथ । १ । नमस्कृत्य नामसन्दोहसन्दोहभानवे । गुरवे परपक्षाद्[illegible]

उ० पुनरावर्तते न च पुनरावर्तते ॥ १ ॥ १५ ॥ इति अष्टमः प्रपाठकः ॥ ८ ॥ छान्दोग्योपनिषत्सम्पूर्णा ॥ ॐ तत्सत् ॥

---

भा० इत्यर्थः । द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ॥ १५ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ छान्दोग्योपनिषद्भाष्ये अष्टमोऽध्यायः समाप्तः ॥ ८ ॥ छान्दोग्योपनिषद्भाष्यं समाप्तं ॥ ॐ तत्सत् ॥

---

व्या० घटीयसे ॥ २ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीभगवदानन्दज्ञानगिरिकृतायां छान्दोग्यभाष्यटीकायामष्टमोऽध्यायः ॥ ८ ॥ छान्दोग्योपनिषद्भाष्यटीका समाप्ता ॥ ॥ समाप्तश्चायं ग्रन्थः ॥ ॥ ॐ तत्सत् ॥

---

अथ तृतीयोऽध्यायः।

## अथ पञ्चमोऽध्याय ।

अथाष्टमोऽध्यायः ।

समाप्ता सूची ॥

---